# REWARD!




BRING 10 DIFFERENT WRAPPER STORIES AND THEIR WRAPPERS TO GET 3 MONOPACKS FREE

## Big Babol

SOFT NON STICKY BUBBLE GUM

**HURRY KIDS!**

- Look out for wrapper stories inside Big Babol monopacks only
- Collect the reward from your nearest dealer
- Offer available in select cities

PERFETTI

McCann/PERFETTI/ 995

# World-class travel alternatives for those who stumble, stagger and crawl.

Toys that transport youngsters to fantasyland. An international range of safe, electronic playthings. **From Mum Toys.** Ideal for the adorable someone who just can't stay still at one place.

TUMBLING MARS RANGER
Outer space training for the young astronaut at home

ROARING TON JET
Jet-age fun for the roaring pilot-to-be

ORION EXPRESS
Voice-aided amusement for your li'l hi-steam engine

FIRST RIDER
Driving lessons for the li'l L-board in your house

COSMO COP
The police car of the future... to keep that li'l rascal in check.

MUM TOYS

# आगतः महापुरुषः

| | |
|---|---|
| गृहस्थः - अहो, आगतः महापुरुषः ! आगच्छतु महाभाग ! स्वागतं भवतः ! | Oh, you have come ! Come in great man ! Hearty welcome ! |
| कर्मकरः - किमर्थम् एवं वदति स्वामिन् ? | Why do you say all that ? |
| गृ - किम् अन्यत् करणीयम् ? मासं यावत् भवतः दर्शनार्थं भगीरथसाहसं कृतं मया । | Whatelse can I do ? I have been trying to meet you for about a month now ! |
| क - पक्षात् पूर्वं भवतः कार्यालयम् अहम् आगतवान् आसम् । भवान् कुत्रापि बहिर्गतवान् आसीत् । | I came to your office fifteen days back, but was told you were away. |
| गृ - सर्वं मिथ्या । मम अक्षिपथम् अनागच्छन् एव सञ्चरति भवान् । मया कार्यानुगुणं धनं न दीयते इति प्रायः चिन्तयति भवान् । | It is all bosh ! You are trying to be away from my sight. May be, you think I will not pay you adequately ! |
| क - तथा नास्ति श्रीमन् ! पूर्वं द्वित्रवारं भवान् एव खलु आपत्काले मम साहाय्यं कृतवान् ? अद्यापि प्रतिदिनं भोजनसमये मम परिवारः भवतः नाम स्मरति । | Not at all. When I was in difficulties you had helped me on two or three occasions and we think of you at food time every day ! |
| गृ - तादृशम् उपकारस्मरणं यदि स्यात् तर्हि एवं न अकरिष्यत् भवान् । | If that is the case, you wouldn't have been doing like this. |
| क - तथा सर्वथा नास्ति श्रीमन् ! अद्यैव भवतः कार्यस्य आरम्भं करिष्यामि । | Not so, sir. I am starting your work today. |
| गृ - अद्य इति उक्त्वा ... | You say, today and ..... |
| क - तथा नास्ति श्रीमन् । अर्धघण्टाभ्यन्तरे त्रयः कर्मकराः अत्र उपस्थिताः भविष्यन्ति । ततः भवतः कार्यस्य आरम्भः एव । | Not at all, sir. Three workers will be here in half an hour and will be starting your work. |

CHANDAMAMA PUBLICATION

# चन्दमामा

संस्थापकः - 'चक्रपाणिः'    सञ्चालकः - 'नागिरेड्डी'

## विद्यालयेषु राजकीयशक्तिः

विद्याभ्यासे छात्राणां प्रवर्तनार्थं नूतनं शैक्षणिकवर्षम् आरब्धम् अस्ति। बहुषु विद्यालयेषु काचित् परम्परा अस्ति यत् प्रतिकक्ष्यं कश्चित् वर्गनायकः भवेत् इति। एतेन छात्रेषु नेतृत्वगुणाः वर्धन्ते। विद्यालयेषु प्रतिवर्षं विद्यार्थिनायकस्य अपि चयनं क्रियते। वर्गनायकाय विद्यार्थिनायकाय च कतिचन दायित्वानि दीयन्ते, केषाञ्चित् आनुकूल्यानाम् उपयोगार्थम् अधिकारः अपि दीयते। विद्यार्थिनायकस्य चयनं निर्वाचनपद्धत्या भवति। किन्तु यावत् एषा निर्वाचनप्रक्रिया बाह्यशक्तीनां प्रभाववलयात् मुक्ता न भवति तावत् सा सुचारुतया चालयितुं न शक्या।

एतत् तु सत्यम् एव यत् स्वातन्त्र्यसङ्ग्रामकाले राष्ट्रनायकैः विद्यार्थिनः प्रेरिताः आसन् यत् राष्ट्रकार्ये सक्रियभागः वोढव्यः इति। एतदनुगुणं छात्राः भागम् ऊढवन्तः च। स्वातन्त्र्योत्तरकाले राजकीयक्षेत्रे महत् परिवर्तनं जातम्। मतभेदकारणतः बहवः पक्षाः जन्म प्राप्तवन्तः। ते च पक्षाः छात्रान् प्रेरितवन्तः यत् भवद्भिः सर्वैः राजकीयक्षेत्रे भागः वोढव्यः इति। एतस्य परिणामतः विद्यालय-महाविद्यालयानां निर्वाचने परोक्षतया राजकीयपक्षाणां प्रभावः विशेषतः प्रसृतः। एतेन विद्यालयीयं नायकचयनक्षेत्रं सर्वथा मलिनं जातम्।

एतादृशेन राजकीयप्रवेशेन बाधितौ केरलीयौ द्वौ विद्यालयौ एषु दिनेषु निर्णीतवन्तौ यत् एतद्विषये पालकानां अभिप्रायस्य सङ्ग्रहः करणीयः इति। अतः ताभ्यां विद्यालयाभ्यां सप्तप्रश्नात्मिका काचित् प्रश्नावली सज्जीकृता। तत्र कश्चन प्रश्नः आसीत् - 'भवत्पुत्रस्य राजकीये भागस्वीकारः किं भवद्भिः अनुमोद्यते ?' इति।

किन्तु आश्चर्यं नाम केनापि पालकेन 'आम्' इति उत्तरं न दत्तम्। पालकेषु केचन शासकाः राजकीयपक्षाणां कार्यकर्तारः चापि आसन्। तेषाम् अपि प्रतिक्रिया एषा एव !! एतस्य अभिप्रायसङ्ग्रहस्य फलितांशः यदा प्रकटितः तदा राज्यस्य अधिकांशाः जनाः अपि पालकानाम् अभिप्रायम् एव सहर्षं पुरस्कृतवन्तः इति श्रूयते।

अतः छात्राः स्वसमयं स्वप्रतिभां च अध्ययने एव विनियोक्तुं यथा शक्नुयुः तथा कर्तुं राजकीयपक्षैः विद्यालयक्षेत्रात् बहिः गन्तव्यम्। एतदर्थम् अयं सुयोग्यः कालः। छात्राणां राजकीयप्रवेशः अनुचितः अनावश्यकश्च।

सम्पुटः - १२    जुलै - १९९५    सञ्चिका - ४

प्रतिकृतिमूल्यं रू. ५-०० • वार्षिकं ग्राहकशुल्कं रू. ६०-००

वार्ताविशेषः - **ऐल्याण्ड्देशे शान्त्यर्थं प्रयत्नः**

ऐल्याण्ड्देशीयानां दृष्ट्या 'सेण्ट् प्याट्रिक्स्' दिनं महत्त्वपूर्णम् अस्ति । कि.पू. चतुर्थे एषः प्रदेशः सेल्ट्स्-उपनिवेशः आसीत् । ततः नवशतवर्षाणाम् अनन्तरं तत्र क्रैस्तमतस्य प्रसारः अभवत् । इंग्लैण्ड्देशे जातः प्याट्रिक्नामकः नौकालुण्ठाकैः गृहीतः अभवत् । गच्छता कालेन सः क्रैस्तधर्मगुरुप्रशिक्षणं प्राप्तवान् । क्रिस्तात् चतुर्थे शतके सः ऐल्याण्ड्प्रदेशं गतवान् । तत्र क्रैस्तमतस्य प्रसारार्थं विशेषपरिश्रमं कृतवान् च । ऐरिश्जनाः तं महता आदरेण पश्यन्ति । मार्च्मासस्य १७ तमे दिनाङ्के तस्य स्मरणोत्सवः आचर्यते च ।

एतस्मिन् वर्षे मार्च्मासस्य १७ दिनाङ्के वाषिङ्ग्टन्नगरस्थे श्वेतभवने द्वयोः ऐरिश्नायकयोः सम्माननं कृतम् । सम्मानितौ च ऐरिश्प्रधानमन्त्री जान् ब्रूटन्, सिन्फिन्संस्थायाः नायकः जेरिं आडम्स् च । गतेभ्यः २५ वर्षेभ्यः प्रभृति ऐरिश् स्वातन्त्र्यसेनया (ऐरिश् रिपब्लिकन् आर्मि = ऐ.आर्.ए.) ब्रिटन्देशेन सह युद्धं क्रियमाणम् अस्ति । जेरी आडम्स् एतस्य युद्धस्य नायकत्वं वहति । अतः अमेरिकादेशेन ऐरिश् प्रतिनिधित्वेन सः चितः यत्, तस्य सम्मानः कृतः यत् तत् ब्रिटन्देशाय न अरोचत । ऐरिश्स्वातन्त्र्यसेनया सङ्घर्षमार्गं परित्यजन्त्या गतात् सप्टम्बर्मासात् शान्त्यर्थं प्रयतमानम् अस्ति । अतः राजनैतिकप्रतिनिधित्वेन आडम्स्वर्यस्य चयनं न अयुक्तम् इति भावयति अमेरिकादेशः ।

ऐल्याण्ड् द्विधा विभक्तः अस्ति । संयुक्तराष्ट्राणां (ग्रेट्ब्रिटन्, स्काट्ल्याण्ड् वेल्स् इ.) पार्श्वे यः भागः अस्ति सः उत्तर-ऐल्याण्ड् इति उच्यते । अवशिष्टः भागः दक्षिण-ऐल्याण्ड् इति उच्यते । ग्रेट्ब्रिटन्देशस्य आधीन्ये स्थिते भागे १९२६ तमे वर्षे विद्रोहः प्रवृत्तः । १९२१ तमे वर्षे दक्षिणभागः 'ऐरिश् फ्री स्टेट्' नाम प्राप्य स्वतन्त्रः जातः । १९१६ तमे वर्षे ईमन् दी वलेरा (सिन्फिन्) वर्यः विद्रोहे भागं वहन् कारागारं गतवान् । १९१७ तमे वर्षे शान्तिस्थापनार्थं ब्रिटन्देशेन सह तेन कृतः वार्तालापः असफलः जातः । १९३८ तमे वर्षे सः प्रधानमन्त्री जातः । १९५१ तमे वर्षे अध्यक्षः जातः च ।

उत्तर-ऐल्याण्ड्प्रदेशे प्रोटेस्टेण्ट्मतीयाः अधिकाः । ते ब्रिटन्सम्बन्धं दृढीकृतवन्तः । ततः रोमन् क्याथोलिक्जनाः भावितवन्तः यत् अस्माकम् उपेक्षा जायमाना अस्ति इति । अतः ते निश्चितवन्तः यत् स्वतन्त्र-ऐरिश्देशस्य सम्बन्धः दृढीकरणीयः इति । १९३९ तमे वर्षे उभयोः पक्षयोः घर्षणम् आरब्धम् । ऐल्याण्ड्देशस्य ऐक्यार्थम् ऐरिश्-स्वातन्त्र्यसेना प्रयत्नम् आरब्धवती । ब्रिटिश्सैन्यं धैर्येण सम्मुखीकृतवती च । २५ वर्षाणि यावत् युद्धं प्रवृत्तम् । युद्धे ३००० जनाः मरणं प्राप्तवन्तः । १९९४ तमे वर्षे अगस्ट्मासे ऐरिश्स्वातन्त्र्यसेना युद्धत्यागम् अङ्गीकृतवती । ततः आरभ्य सिन्फिन्संस्था राजनैतिकपरिवर्तनार्थं प्रयत्नं कुर्वती अस्ति ।

पूर्वम् अमेरिकादेशेन सिन्फिन्संस्था उग्रवादिसंस्थात्वेन परिगणिता आसीत्, तस्याः बहिष्कारः च कृतः आसीत् । किन्तु ऐरिश्स्वातन्त्र्यसेनया यदा युद्धविरामः उद्घोषितः तदा अमेरिकादेशस्य चिन्तने परिवर्तनं जातम् । अमेरिकाध्यक्षः बिल् क्लिण्टन् आशास्ते यत् इंग्लैण्ड्-ऐल्याण्ड्देशयोः मध्ये सन्धिः भविष्यति, शान्तिः च स्थिरीकृता भविष्यति इति । एतादृशस्थितौ संस्थाद्वयस्य नायकयोः अभिनन्दनं किम् अनौचित्यम् आवहेत् ? शान्तिस्थापनविषये इतोऽपि श्रेष्ठः मार्गः अन्यः कः स्यात् ?



# महाज्ञानी

शान्तकुमारः शिवानन्दश्च सहपाठिनौ। तयोः विद्याभ्यासस्य अनन्तरं गुरुः शान्तकुमारं 'वाणिज्यं करोतु भवान्' इति उक्तवान्, शिवानन्दं च 'पाण्डित्यक्षेत्रे भवता इतोऽप्यधिका कृषिः करणीया' इति उक्तवान्। एतदनुगुणं स्वग्रामं रङ्गपुरं गतः शिवानन्दः शास्त्राणां परिशीलने समयं यापयन् सकलशास्त्रपारङ्गतः जातः। शान्तकुमारश्च नगरं गत्वा वाणिज्यम् आरभ्य अचिरात् एव प्रभूतं धनं सम्पादितवान्।

अथ कदाचित् कश्चन संन्यासी शान्तकुमारस्य गृहम् आगतवान्। भोजनादीनाम् अनन्तरं सः शान्तकुमारम् उक्तवान् - "भवान् यत् अपेक्षते तत् याचतु" इति।

तदा शान्तकुमारः हसन् - "श्रीमन्! यद्यत् आवश्यकं तत्सर्वम् अहं स्वसामर्थ्येन सम्पादितवान् अस्मि। यत् मत्समीपे नास्ति तत् दातुं सामर्थ्यं भवतः न स्यात् इति भाति मम। अतः भवतः एव काऽपि अपेक्षा अस्ति चेत् वदतु। अहं तां पूरयिष्यामि" इति।

तदा संन्यासी मन्दहासपूर्वकम् उक्तवान् - "सर्वम् अस्ति मम समीपे इति कथनं तु अज्ञानिनः लक्षणम्। अतः मम तु भाति यत् ज्ञानसम्पादनार्थं 'भवता प्रयत्नः करणीयः इति'" इति।

"मया यद्यत् सम्पादितं तत्सर्वं ज्ञानबलात् एव। एवं स्थिते ज्ञानं सम्पादयितुं प्रयत्नः करणीयः इति भवतः कथनं विचित्रम् इव भाति" इति उक्तवान् शान्तकुमारः।

"मम अपेक्षा मानवमात्रेण पूरयितुम् अशक्या। तत् अजानन् भवान् माम् उक्तवान् यत् भवतः अपेक्षाम् अहम् एव पूरयिष्यामि इति। एतत् एव भवतः अज्ञानं द्योतयति" इति शान्तस्वरेण उक्तवान् संन्यासी।

"भामहः"

"सफलीकर्तुम् अशक्या अपेक्षा यदि प्रकट्यते तर्हि केन वा सा पूरयितुं शक्येत ? तादृशः असाध्यस्य अपि वचनस्य पालयिता लोके को वा अस्ति ? यदि तादृशः लोके कोऽपि स्यात् तर्हि तस्य वासस्थानं मां वदतु । अवश्यं तस्य सकाशात् ज्ञानं ग्रहीष्यामि अहम्" इति उक्तवान् शान्तकुमारः ।

"एवं तर्हि भवान् रङ्गपुरं गच्छतु । तत्र शिवानन्दः नाम ज्ञानी निवसति । तस्य सेवया ज्ञानं प्राप्नोतु" इति उक्त्वा संन्यासी ततः निर्गतवान् ।

शिवानन्दस्य नाम्नः श्रवणात् दिग्भ्रान्तः जातः शान्तकुमारः । 'एषः शिवानन्दः सः एव न स्यात् खलु यश्च पूर्वं मम सहाध्यायी आसीत् ?' इति चिन्तयतः शान्तकुमारस्य मनसि शिवानन्दस्य चित्रम् आगतम् । शिवानन्दः रङ्गपुरे एव वासं करोति इति श्रुतवान् आसीत् शान्तकुमारः । शिवानन्दस्य श्रेष्ठत्वं स्मरतः तस्य मनसि असूया अपि उत्पन्ना ।

'मम श्रेष्ठत्वं रङ्गपुरीयाः सर्वे जानीयुः' इति चिन्तयन् शान्तकुमारः मणि-मौक्तिकखचितायां शिबिकायाम् उपविश्य प्रयाणम् आरब्धवान् । बहवः दास्यः दासाः च तम् अनुसृतवन्तः । चतुर्णां दिनानाम् अनन्तरं शान्तकुमारः सपरिवारं रङ्गपुरं प्राप्तवान् । दर्पं प्रदर्शयन् एव सः रङ्गपुरे पदं स्थापितवान् ।

रङ्गपुरे यावत् शान्तकुमारः



'शिवानन्दस्य गृहं कुत्र ?' इति कञ्चित् पृच्छन् आसीत् तावता शिवानन्दस्य कश्चन शिष्यः तत्र उपस्थितः । सः शान्तकुमारस्य आगमनस्य उद्देशं ज्ञात्वा सपरिवारं तं गुरुगृहं नीतवान् ।

शिवानन्दस्य गृहं रमणीये परिसरे स्थितम् आसीत्, स्वच्छम् अपि आसीत्, किन्तु तत् आकारेण कुटीरम् इव आसीत् । एतत् दृष्ट्वा - 'शिवानन्दः मत्तः अपि श्रेष्ठः तु न जातः' इति चिन्तयन् शान्तकुमारः सन्तोषम् अनुभूतवान् । यतः शान्तकुमारस्य बहुद्वययुतानि प्रासादसदृशानि त्रिचतुराणि गृहाणि आसन् नगरे ।

शान्तकुमारः यदा आगतः तदा शिवानन्दः ग्रामे न आसीत् । केनचित्



भूस्वामिना आयोजितायां शास्त्रगोष्ठ्यां भागं वोढुं गतवान् आसीत् सः । 'श्वः प्रत्यागमिष्यति मम आर्यपुत्रः' इति वदन्ती शिवानन्दस्य पत्नी शान्तकुमारं तत्परिवारं च आदरेण स्वागतीकृतवती ।

शान्तकुमारस्य परिवारे विंशतिः (२०) जनाः आसन् । सर्वेभ्यः अपि षड्रसोपेतं भोजनं व्यवस्थापितवती शिवानन्दपत्नी ।

शान्तकुमारः सायङ्काले शिवानन्द-शिष्यान् आहूय उक्तवान् - "भवतां गुरुः पूर्वं मम सहाध्यायी आसीत् । चिरकालात् सः न दृष्टः आसीत् मया । अतः तं द्रष्टुम् आगतवान् अस्मि । अद्य मध्याह्ने यत् भोजनं व्यवस्थापितं तदर्थम् आपणतः ऋणरूपेण वस्तूनि आनीतानि स्युः । भवन्तः कस्मात् ऋणरूपेण वस्तूनि आनयन्ति इति वदन्तु । अहं सर्वाणि ऋणानि प्रत्यर्पयिष्यामि" इति ।

"ऋणादिव्यवहारं वयं किं जानीमः ? तत्सर्वम् अस्माकम् आचार्यवर्यः एव जानाति । अतः तस्य प्रत्यागमनानन्तरं तम् एव पृच्छतु भवान्" इति उक्तवन्तः शिष्याः ।

अनन्तरदिने शास्त्रगोष्ठीं समाप्य गृहं प्रत्यागतवान् शिवानन्दः । मित्रं शान्तकुमारं दृष्ट्वा नितरां सन्तुष्टः सः महता सन्तोषेण तम् आलिङ्गितवान् । विविधैः प्रश्नैः तस्य गृह-वाणिज्य-व्यवहारादिकं ज्ञातवान् च । शान्तकुमारः प्रभूतं धनं सम्पादितवान् इति ज्ञात्वा नितरां सन्तुष्टः सः ।

तदा शान्तकुमारः कृत्रिमम् असन्तोषं प्रकटयन् - "यावत् भवान् अपि मदीयं स्तरं न प्राप्स्यति तावत् महत्या सम्पत्या अपि न मम सन्तोषः । भवतः एतादृशं निर्धनं जीवनं मह्यं सर्वथा न रोचते । मित्रे मयि स्थिते, किम् एतादृशेन जीवनेन ? लघुगृहे वासः । न सुखसाधनानि अत्र ! न आभरणानि उत्तमवस्त्राणि वा पत्न्याः शरीरे ! किम् एतदपि जीवनम् इति उच्यते ? धिक् भवतः अविवेकिताम् । एतादृशस्थितौ अपि भवान् चतुरः शिष्यान् अन्नवस्त्रादिदानेन पोषयति इति तु नितराम् आश्चर्यकरम् ! अलम् एतादृशेन जीवनेन । मया सह आगच्छतु मन्नगरं प्रति । भवन्तं समर्थं वणिजं करिष्यामि" इति उक्तवान् ।

किन्तु शिवानन्दः तु एतानि वचनानि हृत्पूर्वकाणि इत्येव भावयन् – "एतस्मात् ग्रामात् सर्वथा निर्गन्तुं न शक्नोमि अहम्। मम सर्वाणि अङ्गानि अत्रैव रमन्ते। अत्र दृढमूलः अस्मि। अन्यत्र अहम् इच्छामि चेदपि अस्मद्ग्रामीणाः मां प्रेषयितुं सिद्धाः न भवेयुः। तत्रापि ऋणदातारः इतः मम गमनं सर्वथा न अङ्गीकुर्युः एव" इति उक्तवान्।

"ऋणदातारः कति सन्ति ? तान् सर्वान् आनाययतु" इति उक्तवान् शान्तकुमारः। शिवानन्दशिष्याः गत्वा ऋणदातॄन् आहूय आगतवन्तः। ऋणदातारः पञ्च जनाः आसन्। ते च – कुसीदवणिक्, नित्योपयोगि-वस्त्वापणिकः, गृह-निर्मापयिता मध्यवर्ती, शाकक्षीरविक्रेता, शकटचालकः च। एकैकस्मात् अपि ऋणपरिमाणं ज्ञात्वा शान्तकुमारः निर्णीतवान् यत् आहत्य पञ्चसहस्र-रूप्यकात्मकम् ऋणम् अस्ति इति।

"भवद्भिः शिवानन्दाय यत् ऋणं दत्तं तत् अहं प्रत्यर्पयिष्यामि। अतः भवद्भिः इतः शिवानन्दस्य गमनार्थम् अनुज्ञा दातव्या" इति उक्तवान् शान्तकुमारः।

तदा ते ऋणदातारः शिवानन्दम् उद्दिश्य – "किम् एतत् श्रीमन्! ऋणप्रत्यर्पणं कदा वा प्रार्थितम् अस्माभिः, येन अन्यः कश्चित् आगत्य ऋणं प्रत्यर्पयितुम् उद्युक्तः भवेत् ? किमर्थं भवता एतादृशी व्यवस्था चिन्तिता ?" इति खेदेन पृष्टवन्तः।

"मद्विषये मम स्नेहितस्य कियान् प्रीत्यतिशयः अस्ति इति प्रदर्शयितुम् एषा परीक्षा आयोजिता आसीत् मया। मया





कृतम् ऋणं मयैव प्रत्यर्पयिष्यते'' इति उक्तवान् शिवानन्दः।

तदा शान्तकुमारः आश्चर्यं प्रकटयन् - ''मम परीक्षा कृता वा भवता ? किमर्थम् एषा परीक्षा ?'' इति पृष्टवान्।

''चिरकालानन्तरं मम गृहं प्रति आगतः अतिथिः भवान् । मयि भवतः यादृशः प्रेमानुरागः अस्ति तदनुगुणम् उपायनं किमपि दातव्यं खलु ? तदर्थम् एषा परीक्षा'' इति उक्तवान् शिवानन्दः।

''निर्धनः भवान् मम स्तरानुगुणम् कीदृशम् उपायनं दातुं शक्नुयात् ?'' इति उपहासमिश्रितेन स्वरेण पृष्टवान् शान्तकुमारः।

''भवान् यत् इच्छति तत् दास्यामि'' इति उक्तवान् शिवानन्दः।

''मया अपेक्षितं दातुं निश्चयेन शक्नुयात् वा भवान् ?'' इति पुनः पृष्टवान् शान्तकुमारः।

''अथ किम् ? यद् अपेक्ष्यते तत् प्रार्थयतु तावत्'' इति उक्तवान् शिवानन्दः।

संन्यासिनः वचनं शान्तकुमारस्य मनसि आसीत् एव। 'इदानीं यदि अहं पूरयितुम् अशक्याम् अपेक्षां प्रकटयेयं तर्हि एषः शिवानन्दः निश्चयेन वचनपरिपालने असमर्थः स्यात्। ततश्च एतस्य महाज्ञानित्वं मिथ्यात्वं प्राप्नुयात्' इति विचिन्त्य शान्तकुमारः - ''मह्यम् इदानीं धनस्य आवश्यकता महती अस्ति। यदि विंशतिलक्षं रूप्यकाणि प्राप्येरन् तर्हि तेषाम् उपयोगतः अहं कोटिद्वयपरिमितं धनं सम्पादयेयम्। मम अपेक्षां पूरयितुं सिद्धः किल भवान् ? अतः विंशतिलक्षं रूप्यकाणि ददातु तावत्'' इति उक्तवान्।

शान्तकुमारस्य एताम् अपेक्षां श्रुत्वा सर्वे आश्चर्यचकिताः। किन्तु शिवानन्दः तु शान्ततया एव तिष्ठन् - ''मित्र ! भवता सह एकान्ते मया किञ्चित् वार्तालापः करणीयः अस्ति। अतः गृहस्य अन्तः गच्छाव तावत्'' इति उक्तवान्।

किन्तु शान्तकुमारः अन्तः गमनं निराकुर्वन् - ''भवान् सर्वेषां सम्मुखे एव मम प्रेमानुरागं परीक्षितवान्। अतः यत् वक्तव्यम् अस्ति तत् सर्वेषां पुरतः एव वदतु तावत्। ज्ञानिनः असत्यं तु न कथयन्ति खलु ?'' इति

उक्तवान्।

शिवानन्देन बहुधा प्रार्थ्यमानः अपि शान्तकुमारः स्वनिर्णयं परिवर्तयितुं सिद्धः सर्वथा न जातः। तदा शिवानन्दस्य शिष्याः उक्तवन्तः – "आचार्यवर्य ! भवतः अपमानः अस्माकम् अपि अपमानकरः । अतः विंशतिलक्षं रूप्यकाणि वयम् आनीय दास्यामः। कृपया अनुज्ञां ददातु" इति।

तदा शान्तकुमारः – "भोजनार्थम् अपि पराश्रयणं कुर्वन्तः भवन्तः किं विंशतिलक्षं रूप्यकाणि आनीय दातुं शक्नुवन्ति ?" इति उपहासेन पृष्टवान्।

एतत् श्रुत्वा शिवानन्दः हसन् – "मित्र ! एते न निर्गतिकाः । एते चत्वारः अपि कोट्यधीशानां पुत्राः । मत्तः विद्यां प्राप्तुम् आगताः । अतः एव विद्याभ्यासकाले यथा भवितव्यं तथा तिष्ठन्ति एते। राजाधिराजैः महाधनिकैः च मह्यं समर्पितानि अमूल्यानि मणि- मौक्तिकाभरणानि मत्समीपे अपि सन्ति । किन्तु मम सम्पत्तेः प्रकाशनं मम इष्टाय न आसीत् । तथापि भवतः दुराग्रहकारणतः तत् प्रकटनीयम् एव अभवत्। मत्सकाशे विद्यमानेषु मणिषु एकः मणिः भवते दत्तः चेत् भवता विंशतिलक्षाधिकानि रूप्यकाणि प्राप्यन्ते" इति उक्त्वा प्रकोष्ठतः एकं मणिम् आनीय शान्तकुमाराय दत्तवान्।

मणिं दृष्ट्वा दिग्भ्रान्तः शान्तकुमारः – "मित्र ! अहं पराजितः अस्मि । भवान् वचनपरिपालने असमर्थः यथा भवेत् तथा करणीयम् इति उद्देशेन मया किमपि कृतम्। किन्तु तत्र जयः भवतः एव जातः। सम्पत्तौ सत्याम् अपि गर्वम् अप्राप्य सरलं जीवनं यापयन् भवान् महाज्ञानी इत्यत्र नास्ति सन्देहः । कृपया माम् अपि उत्तमजीवनमार्गम् उपदिशतु" इति वदन् शिवानन्दं साष्टाङ्गं नमस्कृतवान्।

ततः शान्तकुमारस्य अपेक्षायाः अनुगुणं शिवानन्दः उपनिषद्गीताभाष्यादीनि बोधितवान् । ततः निर्गतः शान्तकुमारः दानादिना धनस्य सद्विनियोगं कुर्वन् उत्तमां कीर्तिं सम्पादितवान्।



# योग्या स्नुषा

अमृतपुरे धनदेवी नाम काचित् धनिका आसीत् । तस्याः कृपणता सर्वेषां वार्तालापस्य विषयः आसीत् । किन्तु धनदेवी वदति स्म - 'मया कृपणता न प्रदर्श्यते, अपि तु धनसञ्चयरूपं व्यवहारकौशलं प्रदर्श्यते' इति ।

बहुभ्यः वर्षेभ्यः पूर्वम् एव तस्याः पतिः दिवङ्गतः आसीत् । एकमात्रपुत्रं नागनाथं सा अतिप्रीत्या पालितवती आसीत् । यदा पुत्रः प्राप्तवयस्कः जातः तदा धनदेवी योग्यायाः स्नुषायाः अन्वेषणार्थम् उद्युक्ता अभवत् ।

धनदेवी यद्यपि कृपणा, तथापि प्रभूतेन ऐश्वर्येण युक्ता आसीत् इत्यतः तस्याः पुत्राय स्वपुत्रीं दातुं बहवः सिद्धाः आसन् । किन्तु धनदेवी कन्यापितॄन् वदति स्म - 'मया आयोज्यमानायां परीक्षायां या उत्तीर्णतां प्राप्नोति सा एव मम स्नुषा भविष्यति, न अन्या' इति । धनदेव्या आयोजितायां परीक्षायां काऽपि उत्तीर्णतां न प्राप्नोति स्म एव ।

कदाचित् धनदेव्या श्रुतं यत् पार्श्वग्रामे रुक्मिणी नाम योग्या कन्या अस्ति इति । धनदेवी कन्यागृहं गत्वा भोजनं कृतवती । भोजनानन्तरं सा तां कन्याम् उक्तवती - ''रुक्मिणी इति खलु भवत्याः नाम ? सुन्दरं नाम भवत्याः । प्रथमं भवती भोजनं करोतु तावत् । ततः परीक्षायाः विचारः'' इति ।

तदा रुक्मिणी धनदेवीम् उक्तवती - ''दैनन्दिनव्ययात् अतिरिक्तः व्ययः यस्मिन् दिने भवति तस्मिन् दिने व्ययपरिमाणकः सञ्चयः कथञ्चित् क्रियते मद्गृहसदस्यैः । अतः अद्य अहं भोजनं न करोमि'' इति ।

एतत् श्रुत्वा धनदेवी महता सन्तोषेण - ''अहो, सञ्चयगुणेन माम् अपि अतिशेते भवती । मम योग्या स्नुषा भवती एव'' इति उक्तवती ।






(भुवनसुन्दर्याः निमित्तं ट्राय्नगरस्य उपरि ग्रीक्जनाः आक्रमणं कृतवन्तः । ततः वर्षद्वयाभ्यन्तरे पक्षद्वये अपि महायोधाः बहवः मरणं प्राप्तवन्तः । एवं मरणं प्राप्तवत्सु ग्रीक्पक्षीयौ वज्रकायः भूषणः च, ट्राय्पक्षीयौ वीरसिंहः मोहनश्च प्रमुखाः आसन् । मोहनस्य मरणस्य अनन्तरं तदीयः अनुजः अरिभयङ्करः अनिच्छन्तीम् अपि भुवनसुन्दरीं बलात् परिणीतवान् । ट्राय्नगरस्य पतनार्थं कारणीभूतस्य रूपधरस्य साहाय्यं कृतवत्यौ भुवनसुन्दरी, तस्याः श्वश्रूः च । तदनन्तरम् .....)

ट्राय्नगरस्य पतनात् किञ्चित्पूर्वं वर्धनस्य पुत्रयोः अन्तःकलहः प्रारब्धः । एतस्य फलतः बह्व्यः अहितकरघटनाः प्रवृत्ताः ।

एतत् दृष्ट्वा खिन्नः वर्धनः ग्रीक्जनैः सह सन्धिं कर्तुम् इच्छन् रहसि एकं प्रयत्नम् आरब्धवान् । सः प्रत्याम्नायनामकं स्वस्य श्यालं चक्रवर्तिसमीपं प्रेषितवान् । प्रत्याम्नायाय अरिभयङ्करः सर्वथा न रोचते स्म । अतः सन्धिप्रस्तावार्थं गतः सः रूपधरेण मिलित्वा एकां दुष्टयोजनां निर्मितवान् । तदनुगुणं निश्चितं यत् प्रत्याम्नायेन ट्राय्नगरं रूपधराधीनं करणीयं, रूपधरेण च प्रत्याम्नायाय ट्राय्सिंहासनं, राजधने अर्धभागश्च दातव्यः इति । तदनन्तरं प्रत्याम्नायः रूपधरम् उक्तवान् यत् एतस्मिन् कार्ये प्रशंसनः अवश्यम् अस्माकं साहाय्यं कुर्यात् इति ।



ट्राय्नगरे ग्रीक्पक्षस्य समर्थकाः बहवः आसन् । ट्रायनगरात् बुद्धिमतीविग्रहः आनीतः आसीत् अपि । इतःपरं किं, ग्रीक्जनैः यदि ट्राय्नगरं कथञ्चित् प्रविश्येत तर्हि ट्राय्नगरस्य पतनम् अवश्यं स्यात् एव । अतः ग्रीक्जनाः बृहदाकारकं काष्ठमयम् एकम् अश्वं सज्जीकर्तुम् उद्युक्ताः अभवन् ।

एताम् अश्वं दोर्दण्डः नाम शिल्पी निर्मितवान् । दोर्दण्डः ग्रीक्पक्षीयत्वेन युद्धं कर्तुं ३० नौकाभिः सह आगतवान् आसीत् । सः यथा मल्लयुद्धे सुनिपुणः तथैव शिल्पकार्ये अपि । सः अश्वस्य पृष्ठभागे एकं द्वारं निर्मितवान् आसीत् । बाह्यदर्शनात् तत् द्वारं केनापि अभिज्ञातुं न शक्यम् आसीत् । अश्वस्य उदरभागः रिक्तः आसीत् । पृष्ठभागात् उदरतलं प्राप्तुम् एकां निश्रेणीं योजितवान् आसीत् दोर्दण्डः । अश्वस्य उदरस्य एकस्मिन् पार्श्वे लिखितम् आसीत् - "सुखमयस्य प्रतिप्रयाणस्य निमित्तं ग्रीक्जनैः बुद्धिमतीदेव्यै समर्पितम् उपायनम् एतत्" इति ।

एतदनन्तरं केचन ग्रीक्वीराः अश्वस्य उदरे स्थितिं यथा अङ्गीकुर्युः तथा कृतवान् रूपधरः । ततः सः प्रतापेन, देवमयेन, त्रिंशद्वीरैः च सह अश्वस्य उदरं प्रविष्टवान् । अश्वस्य निर्माता दोर्दण्डः अपि तैः सह आसीत् । सर्वेषां प्रवेशस्य अनन्तरं निश्रेणी अपसारिता । अश्वस्य पृष्ठभागे स्थितं द्वारं पिधाय कीलितं च ।

अनन्तरकार्यक्रमाः रूपधरेण यथा चिन्तिताः तथैव प्रवृत्ताः ।

यदा अन्धकारस्य प्रसारः आरब्धः तदा ग्रीक्जनाः शिबिरम् अग्निना दग्धवन्तः । नौकाम् आरुह्य टेनेडोस्द्वीपस्य समीपे स्थिते प्रदेशे वासं कृतवन्तः च । काष्ठमयः अश्वः, तस्य अन्तः स्थिताः योधाः च शिबिरप्रदेशे एव स्थिताः अभवन् । कश्चन योधः अपि काष्ठमयेन अश्वेन सह उद्देशपूर्वकम् एव स्थितवान् । तस्य नाम चौर्यनाथः इति । सः रूपधरस्य दायादः आसीत् । ग्रीक्नौकाभिः यदा प्रत्यागन्तव्यं भविष्यति तदा दीपज्वालनपूर्वकं सङ्केतं दातुं सः नियुक्तः आसीत् ।

ततः दिनद्वयानन्तरं ग्रीक्सेनाशिबिरस्य वार्तां सङ्ग्रहीतुम् आगताः ट्राय्नगरीयाः

गुप्तचराः ग्रीकशिबिरस्य स्थितिं दृष्ट्वा आश्चर्यम् अनुभवन्तः स्वनगरं प्रतिगत्य निवेदितवन्तः यत् ग्रीकशिबिरं भस्ममयं जातम् अस्ति इति, समुद्रतीरे पर्वताकारः काष्ठमयः कश्चन अश्वः दृश्यते इति च। एतां वार्तां श्रुत्वा वर्धनः पुत्राभ्यां सह तं विचित्रम् अश्वं द्रष्टुं समुद्रतीरम् आगतवान्।

सर्वे अश्वम् आश्चर्यातिरेकेण पश्यन्तः आसन्। तत्समये कश्चित् उक्तवान् - "एतस्य उपरि लिखितम् अस्ति यत् बुद्धिमतीदेव्यै उपायनम् एतत् इति। अतः एषः काष्ठमयाश्वः कुतो वा बुद्धिमती-मन्दिरस्य पुरतः न स्थापनीयः अस्माभिः?" इति।

तदा अपरः उक्तवान् - "युद्धे बुद्धिमतीदेवी अस्माकं साहाय्यं यावत् कृतवती ततोऽपि अधिकं साहाय्यं शत्रुपक्षस्य कृतवती। अतः इदानीम् एव एतस्य दाहः वरम्। अथवा एतं भञ्जयित्वा एतस्य अन्तः किम् अस्ति इति परीक्षा वा करणीया" इति।

एतं प्रस्तावं न अङ्गीकृतवान् वर्धनः। सः उक्तवान् - "देव्यै यत् समर्पितं तस्य नाशनं पापाय। अतः चक्राणां साहाय्येन वयम् एतं काष्ठमयाश्वं नगरं प्रति नयाम" इति।

एतदनुगुणं ट्रोजन्जनाः चक्राणां साहाय्येन तं काष्ठमयाश्वं दुर्गद्वारसमीपं नीतवन्तः। किन्तु द्वारस्य आकारः अश्वस्य आकारस्य अपेक्षया अपि लघुः आसीत्। अतः ट्रोजन्जनाः दुर्गभित्तिं पातयित्वा द्वारं विशालीकृत्य अश्वं नगरस्य अन्तः नीतवन्तः।





अश्वः यदा अन्तः गतः तदा भञ्जिता भित्तिः यथापूर्वं कृता । अश्वश्च नगरस्य मध्यभागं प्रति नीतः ।

इदानीम् अश्वविषये ट्रोजन्जनानां मध्ये पुनरपि चर्चा आरब्धा । वर्धनस्य पुत्र्याः दिव्यदृष्टिः आसीत् । सा तया दिव्यदृष्ट्या अश्वं दृष्ट्वा उक्तवती - ''एतस्य अन्तः योधाः सन्ति'' इति ।

प्रत्याम्नायस्य पुत्रः तीक्ष्णदृष्टिः तस्याः एतत् वचनं समर्थयन् - ''मूर्खाः भवन्तः । विवेकी को वा शत्रुपक्षेण दत्तम् उपायनं स्वीकुर्यात् ?'' इति वदन् अश्वं लक्ष्यीकृत्य स्वकीयं शूलायुधं क्षिप्तवान् । तावता अश्वस्य अन्तर्भागतः आयुधघर्षणात् उत्पद्यमानः 'कणकण'ध्वनिः श्रुतः ।

तदा तत्र सम्मिलिताः सर्वे एकस्वरेण उक्तवन्तः - ''एषः अश्वः वञ्चनामयः । एषः अग्निना दग्धव्यः । एतस्य समूलनाशः स्यात् अचिरात् एव'' इति ।

यदा ट्रोजन्जनानां मध्ये एवं कोलाहलः प्रचलन् आसीत् तदा उभौ सैनिकौ एकं ग्रीक्सैनिकं बद्ध्वा आनीतवन्तः । सः एव चौर्यनाथः । ट्रोजन्जनाः चौर्यनाथं विविधैः प्रश्नैः पीडितवन्तः । तदा रूपधरः यथा बोधितवान् तथा उत्तरं दत्तवान् चौर्यनाथः - ''प्रबोधनस्य हननरहस्यम् अहं जानामि । एतं विषयम् अहं जानामि इत्यतः मयि कोपः रूपधरस्य । ग्रीक्जनाः युद्धात् जुगुप्सिताः सन्ति । यदा ते आक्रमणार्थम् उद्युक्ताः आसन् तदा अपि वायुः अनुकूलकरः न आसीत् । तदा ते बलिदानेन वायुम् अनुकूलकरं कृतवन्तः आसन् । इदानीम् अपि इतः प्रतिगमनार्थं वायुः अनुकूलकरः न आसीत् । अतः रूपधरः कश्चित् बलिं कर्तुम् इच्छन् कांशुकम् अग्रे आनीय पृष्टवान् - 'एतेषु कः बलिरूपेण समर्पणीयः ?' इति । 'दशदिनाभ्यन्तरे उत्तरं वदिष्यामि' इति उक्तवान् कांशुकः । ततः रूपधरः कांशुकाय उत्कोचं दत्तवान् स्यात् इति अहं तर्कयामि । दशमे दिने कांशुकः मां हस्तसङ्केतेन निर्दिष्टवान् । ततः ते मां शृङ्खलया बद्धवन्तः । यावत् ते मां बलिरूपेण अर्पयितुं सन्नाहं कुर्वन्तः आसन् तावता अनुकूलकरः वायुः आगतः । अतः प्रतिगमनसन्नाहे मग्नाः सर्वे मम उपस्थितिं विस्मृतवन्तः । अत्रान्तरे

अहं तेभ्यः आत्मानं रक्षन् ततः पलायितवान्'' इति।

वर्धनः चौर्यनाथस्य वचनेषु विश्वसितवान्। ततः सः पृष्टवान् - ''एतस्य काष्ठमयाश्वस्य का कथा ?'' इति।

''बुद्धिमतीदेवी अस्माकम् अनुकूलकरी आसीत् इति तु सत्यम् एव। किन्तु रूपधरः देवमयः च यदा भवतां नगरतः तां चौर्येण नीतवन्तौ तदा सा क्रुद्धा जाता। यदा सा अस्मच्छिबिरं प्रति नीता तदा तस्याः मुखात् त्रिवारम् अग्निज्वाला उत्पन्ना। विग्रहस्य पादौ कम्पमानौ जातौ। ततः स्पष्टम् अभवत् यत् देवी असन्तुष्टा इति। एतत् दृष्ट्वा कांशुकः चक्रवर्तिनं सूचितवान् यत् इदानीं युद्धप्रयत्नेन अलम्, अग्रे योग्ये मुहूर्ते पुनरपि युद्धं करवाम, इदानीं प्रतिगमनं वरम् इति। एतत् अङ्गीकृतवान् चक्रवर्ती। ततः बुद्धिमतीदेवी एतस्मिन् काष्ठमये अश्वे स्थापिता'' इति उक्तवान् चौर्यनाथः।

''एतदर्थम् एषः अश्वः महाकारकत्वेन किमर्थं निर्मितः तैः ?'' इति पुनः पृष्टवान् वर्धनः।

तदा चौर्यनाथः उक्तवान् - ''भवन्तः एतम् अश्वं नगरस्य अन्तः नेतुं यथा न शक्नुयुः तथा करणीयम् इति तेषाम् उद्देशः आसीत्। 'अश्वस्य आकारं दृष्ट्वा एतस्य नयने उपेक्षां प्रदर्श्य यदि भवन्तः प्रतिगच्छेयुः तर्हि बुद्धिमतीदेवी भवतां विषये कुपिता भवेत्' इति चिन्तितवन्तः ते। बुद्धिमतीदेवी नगरस्य अन्तः नीता चेत् भवताम् अपजयः कदापि न स्यात् इति जानन्ति स्म ते। एतस्य निवारणार्थम् एव ते एतादृशं



विशालाकारकम् अपूर्वम् अश्वं निर्मितवन्तः'' इति।

''एतत्सर्वम् असत्यम् ! रूपधरस्य कुतन्त्रस्य अनुगुणम् एषः किमपि वदन् अस्ति । एतस्य वचनेषु मा विश्वसितु भवान् । अस्थाने विश्वासः आत्मनाशाय भवेत्'' इति क्रोधमिश्रितेन स्वरेण उक्तवान् तीक्ष्णदृष्टिः।

''मया इदानीम् एव इतः निर्गत्य इष्टदेवतायाः आराधनं कृत्वा एतस्य अश्वस्य दहनं क्रियते'' इति उक्त्वा ततः निर्गतवान् सः । किन्तु यथा उक्तं तथा आचरितुं न शक्तवान् सः। यतः यदा सः गृहं गतवान् तदा कुतश्चित् आगतौ महासर्पौ तीक्ष्णदृष्टेः उभौ कुमारौ स्वशरीरेण आवृत्य दंशनेन मारितवन्तौ । पुत्रयोः रक्षणार्थं गतः तीक्ष्णदृष्टिः बलात् सर्पौ प्रहृतवान्। कुपितौ सर्पौ तीक्ष्णदृष्टिम् अपि दष्टवन्तौ । ततः तीक्ष्णदृष्टिः प्राणैः वियुक्तः अभवत् । एवं ट्राय्नगरस्य रक्षणार्थं तेन कर्तुम् इष्टः उपायः कार्यान्वितः एव न जातः।

'बुद्धिमतीदेव्याः विरुद्धं यत् वचनम् उक्तं तस्य कारणतः एव तीक्ष्णदृष्टिः मरणं प्राप्तवान्' इति चिन्तितवन्तः ट्रोजन्जनाः। 'अश्वं लक्ष्यीकृत्य शूलायुधं क्षिप्तं यत् ततः एव कुपिता बुद्धिमतीदेवी तीक्ष्णदृष्टिम् अमारयत्' इति जनान् उक्तवान् वर्धनः। इदानीं सर्वे चौर्यनाथस्य वचनेषु विशेषश्रद्धां प्रदर्शितवन्तः।

एतदनन्तरं मन्त्रसंस्कारपुरस्सरं काष्ठमयः अश्वः बुद्धिमतीदेव्यै समर्पितः। ट्रोजन्महिलाः नदीतीरं गत्वा पुष्पाणि सङ्गृह्य आनीय मालां रचयित्वा अश्वस्य कण्ठे अर्पितवत्यः। अश्वस्य चतुर्णां पादानां मूले अपि ताभिः पुष्पाणि समर्पितानि । विना परिश्रमम् एव युद्धे यः जयः प्राप्तः ततः सन्तुष्टाः ट्रोजन्जनाः उत्सवाचरणे उद्युक्ताः अभवन्।

प्रशासनः तु प्रवर्तमानं सर्वं दृष्ट्वा खेदं दिग्भ्रान्तिं च प्राप्नुवन् सैन्येन सह ऐडापर्वतम् उद्दिश्य निर्गतवान्।

(आगामिसञ्चिकायां समाप्तिः।)



# र स वा र्ताः

## अपूर्वं तरणसाहसम्

'गभीरे जलसन्धौ तरणं नाम लीलाचेष्टितम् इव' इत्येतं विषयं प्रमाणीकृतवन्तः सन्ति मद्रासनगरीयः कुट्रालीश्वरः तत्समवयस्काः अन्ये च । एतैव प्रेरितः इव जी. डिलीज्नामकः फ्रान्स्देशीयः अट्लाण्टिक्महासमुद्रम् एकाकितया तरीतुं सङ्कल्पं कृतवान् । गतडिसेम्बर्मासस्य १६ दिनाङ्के सः बेर्ड्डीद्वीपात् प्रस्थितवान्, मासद्वयानन्तरं बर्बिडोस्प्रदेशस्थं ब्रिड्जन्नगरं प्राप्तवान् च । तरणसमये तेन 'ग्रैपर्स्' नामकं साधनम् उपयुक्तं, शयनादिनिमित्तं ४ मीटर्दैर्घ्यात्मकः दृढः उडुपः आश्रितः च । यदा सः गम्यं स्थानं प्राप्तवान् तदा तदीयौ पुत्रौ थामस् क्लैमेण्ट् च मात्रा केथरिनया सह आगत्य तं स्वागतीकुर्वन्तौ तस्य सन्तोषं वर्धितवन्तौ ।

## नेत्रयोः विक्रयणम्

नेत्रदानं सर्वैः श्रुतम् एव । मानवताद्दृष्ट्या क्रियमाणेषु कार्येषु नेत्रदानस्य विशिष्टं स्थानं परिकल्पितम् अस्ति । किन्तु मूत्रकोषस्य इव नेत्रयोः विक्रयणं तु न प्रचलति । ययोः नेत्रयोः प्रस्तावः अस्माभिः अत्र क्रियमाणः अस्ति ते नेत्रे न सामान्ये । ते प्रसिद्धस्य



भौतशास्त्रज्ञस्य ऐन्स्टैन्वर्यस्य नेत्रे । ते च इदानीं डा।। हेंरी अब्राम्स्समीपे स्तः । प्रभूतम् अपि धनं दत्त्वा तयोः क्रयणं कर्तुं सिद्धाः सन्ति बहवः । तेषु प्रसिद्धगायकः मैकल् जाक्सन् अपि अन्यतमः । १९५५ तमे वर्षे यदा ऐन्स्टैन्वर्यस्य मरणं जातं तदा 'आटोप्सी' तन्त्रेण तदीयानि कानिचन अङ्गानि शरीरात् पृथक्कृतानि । डा।। थामस् हार्वे तत्काले एतादृशं कार्यं निरूढवान् आसीत् । तस्य समीपे इदानीम् अपि ऐन्स्टैन्वर्यस्य मस्तिष्कम् अस्ति । सः वदति यत् आटोप्सीसमये नेत्रे न शरीरात् पृथक्कृते इति । अतः इदानीं विक्रय्ये नेत्रे कस्य इति तु इतोऽपि न निर्णीतम् ।

## अतिवृद्धा का स्यात् ?



गिन्नीस्-पुस्तकं सूचयति यत् फ्रान्स्देशीया जिन् लूसी काल्मेट् एव अतिवृद्धा इति, या च स्वकीयं १२१ जन्मदिनोत्सवाचरणं कृतवती अस्ति । किन्तु ब्रेजिल्देशीया जेरोनिमा वदति यत् लूसीकाल्मेट् अपेक्षया अपि मम वयः एव अधिकम् इति । स्वस्य अतिवृद्धत्वं प्रमाणीकर्तुं तस्याः समीपे प्रमाणानि न सन्ति । किन्तु एतावत् तु ज्ञायते यत् सा १८७१ तमे वर्षे मार्च्मासस्य ११ दिनाङ्के दासकुले जन्म प्राप्तवती इति । जन्मानन्तरं १७ दिने क्रैस्तधर्ममन्दिरे तस्याः नाम योजितम् । १८८८ तमे वर्षे ब्रेजिल्देशे दास्यपद्धतिः उत्पाटिता । वैद्याः अभिप्रयन्ति यत् ४८ अङ्गुलीत्रल्पयुक्तायाः जेरोनिमायाः शरीरे वार्धक्ये विलम्बेन पदम् अस्थापयत् इति । इदानीं जिज्ञासा उत्पन्ना अस्ति यत् गिन्नीस्पुस्तकस्थः उल्लेखः परिवर्त्येत उत न इति ।



# त्रयः गुणशालिनः

'का कथा उक्ता चेत्, कीदृशाः प्रश्नाः पृष्टाः चेत् च त्रिविक्रमस्य मुखात् वचनानि निर्गच्छेयुः' इति चिन्तयन्तं वेतालं वशीकर्तुम् इच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान् । वृक्षम् आरुह्य शाखायां लम्बमानं शवं स्कन्धे आरोप्य अधः आगतवान्, यथापूर्वं मौनं श्मशानं प्रति प्रस्थितवान् च । तदा शवान्तर्गतः बेतालः अवदत् - ''राजन् ! विशालस्य देशस्य राजा सन्, अपरिमितसम्पत्तेः स्वामी अपि सन् भवान् एतादृशे भयजनके श्मशाने सञ्चारं करोति यत् तत् मयि न केवलम् आश्चर्यम्, अपि तु कांश्चन सन्देहान् अपि जनयति । यः राजा भवति सः न केवलं शत्रुभ्यः, अपि तु कपटेभ्यः मित्रेभ्यः भृत्येभ्यः च आत्मनः रक्षणार्थम् उपायान् जानीयात् । आस्थाने ये ये कार्यं कुर्वन्ति ते सर्वे स्वामिभक्ताः एव इति निर्णयम् अविचार्य न कुर्यात् अपि । राजनीतेः एतं प्रमुखम् अंशं विस्मृत्य स्वस्य

## वेतालकथा



आस्थानस्य गूढचरस्य निमित्तं प्राणान् एव समर्पयितुं प्रवृत्तस्य राज्ञः चन्द्रसेनस्य कथां श्रावयामि, येन भवतः मार्गायासः परिहृतः भवेत् । अतः एतां कथां श्रद्धया शृणोतु तावत्'' इति।

अनन्तरं वेतालेन कथा आरब्धा -

पूर्वं शरच्चन्द्रिकाराज्यं चन्द्रसेनः नाम राजा पालयति स्म। तस्य आस्थाने शिवदत्तः नाम गूढचरः आसीत् । राज्ञः विषये विशेषश्रद्धा आसीत् तस्य । सूचितस्य कार्यस्य सिद्ध्यर्थं प्राणापायम् अपि अविगणय्य कार्यं कुर्वतः शिवदत्तस्य विषये राज्ञः चन्द्रसेनस्य अपि विशेषप्रीतिः आसीत्।

मणिपुरं शरच्चन्द्रिकाराज्यस्य प्रतिवेशि-राज्यम् । तस्य राजा प्रचण्डः । प्रचण्डः सदा चिन्तयन् भवति स्म यत् कः उपायः आश्रितः चेत् शरच्चन्द्रिकाराज्यं मदायत्तं भवेत् इति । एषः विषयः चन्द्रसेनेन अपि ज्ञातः । अतः चन्द्रसेनः निर्णीतवान् यत् शत्रोः आक्रमणात् पूर्वं मया एव शत्रुराज्यस्य उपरि आक्रमणं करणीयम् इति । एतदर्थं प्रचण्डस्य सेनाबलं, दुर्गप्रवेशार्थं मार्गः इत्यादयः ज्ञातव्याः खलु ? अतः राजा विश्वासपात्रं गूढचरं शिवदत्तम् एतस्मिन् कार्ये नियोजितवान्।

शिवदत्तः सामान्यकृषिकस्य वेषं धृत्वा उपायेन मणिपुरराज्यं प्रविष्टवान् । महता कौशलेन तद्देशीयस्य सैन्यबलं, दुर्गस्य लोपदोषान् च ज्ञातवान्।

'मया ये विषयाः ज्ञाताः ते अविलम्बेन चन्द्रसेनराजं प्रति निवेदनीयाः' इति निश्चित्य सः समीचीनतरम् अपि दूरमार्गं परित्यज्य कष्टकरम् अरण्यमार्गम् एव आश्रितवान्।

अरण्यमार्गे गमनसमये कश्चन घोरः राक्षसः अकस्मात् शिवदत्तस्य पुरतः प्रत्यक्षः जातः।

राक्षसात् आत्मनः रक्षणार्थं शिवदत्तः धावनम् आरब्धवान् । किन्तु राक्षसः विनायासं शिवदत्तस्य गमनं निवारयन् - ''अये, मत्तः कथमपि आत्मानं रक्षितुं न प्रभवति भवान् । एतम् अरण्यप्रदेशम् ऐदम्प्राथम्येन आगतेन मया प्राप्तः प्रथमः पुरुषः भवान् एव। एवं स्थिते हस्तगतं भवन्तं

कथम् अहं परित्यजेयम् ?" इति वदन् शिवदत्तं वामहस्तेन लीलया उन्नीतवान्।

तदा शिवदत्तः धैर्येण उक्तवान् - "अये राक्षसोत्तम ! प्रथमं मम कथनं शृणोतु किञ्चित् । मम नाम शिवदत्तः इति । चन्द्रसेनराजस्य गुप्तचरः अस्मि अहम् । शत्रुराजसम्बन्धिनः केचन प्रमुखाः विषयाः मया सङ्गृहीताः सन्ति। तान् महाराजं निवेद्य अचिरात् एव प्रत्यागमिष्यामि। तदनन्तरं मां खादितुम् अर्हति भवान्। इदानीं कृपया मां मुञ्चतु" इति।

तदा राक्षसः हसन् - "हस्तच्युतः भवान् पुनः प्राप्येत इत्यत्र कथं विश्वासः कर्तुं शक्येत ? प्रथमं तत् वदतु - भवता सङ्गृहीतः तादृशः प्रमुखः विषयः कः सः ?" इति पृष्टवान्।

"तत् तु रहस्यम्। तत् अहं राजानम् एव निवेदयामि, न अन्यम्" इति उक्तवान् शिवदत्तः।

"यदि भवता विषयः उच्येत तर्हि कदाचित् अहं भवन्तं त्यजेयम् अपि। विषयः न उक्तः चेत् खादिष्यामि भवन्तम्" इति उक्तवान् राक्षसः।

"एवं तर्हि मां खादतु तावत् । अहं तु विषयं न वदामि" इति निर्विकारभावनया उक्तवान् शिवदत्तः।

एतत् श्रुत्वा आश्चर्यं सन्तोषं च अनुभवन् राक्षसः - "साधु मानव, साधु ! सन्तुष्टोऽस्मि भवतः धैर्येण । यत् वक्तव्यं तत् महाराजम् उक्त्वा अविलम्बेन प्रत्यागच्छतु तावत्"



इति उक्तवान्।

शिवदत्तः राक्षसं कृतज्ञतावचनानि उक्त्वा वेगेन राजधानीं गत्वा चन्द्रसेनं मणिपुररहस्यानि सर्वाणि उक्तवान् । ततः निर्गमनत्वरां प्रदर्शयन्तं तं पृष्टवान् राजा - "किमर्थं त्वरा ?" इति।

तदा शिवदत्तः राक्षसस्य मेलनं, वचनदानं च निवेद्य - "महाराज ! अल्पा प्रार्थना मम - मम कुटुम्बस्य कोऽपि क्लेशः यथा न भवेत् तथा व्यवस्था अवश्यं भवता करणीया इति" इति उक्त्वा अरण्यं प्रति निर्गतवान्।

शिवदत्तस्य सत्यप्रियतां प्रभुभक्तिं च ज्ञात्वा रोमाञ्चितः चन्द्रसेनः मन्त्रिणं शासनसम्बद्धान् कांश्चन मुख्यविषयान्



उक्त्वा शिवदत्तः यथा न जानीयात् तथा तम् अनुसृतवान्, अरण्यं प्राप्तवान् च।

इत्तस्य वचनस्य अनुगुणम् आगतं शिवदत्तं दृष्ट्वा राक्षसः नितराम् आश्चर्यचकितः। तावता राजा राक्षसस्य पुरतः आगत्य उक्तवान् - "राक्षसोत्तम! शिवदत्तस्य सत्यप्रियता दृष्टा खलु भवता? मया सूचितस्य कार्यस्य करणकाले सः भवता दृष्टः। अतः तस्य रक्षणं मम दायित्वम्। कृपया एतं परित्यज्य मां खादतु भवान्" इति।

तदा शिवदत्तः महाराजं पश्यन् - "महाराज! मम मरणात् एकस्य कुटुम्बस्य कष्टं स्यात्। किन्तु भवतः मरणात् तु समग्रं राज्यम् एव कष्टम् अनुभवेत्" इति उक्त्वा राक्षसं पश्यन् - "इदानीं मम खादनम् एव युक्तम्" इति उक्तवान्।

तदा राजा - "शिवदत्त! राज्यविषये काऽपि चिन्ता नास्ति। यदा भवान् राजधानीं प्राप्नुयात् तदा भवतः पट्टाभिषेकार्थं व्यवस्थां कृत्वा एव आगतवान् अस्मि। भवतः शासने सर्वाः प्रजाः सुखं सन्तोषं च प्राप्नुयुः एव" इति उक्तवान्।

तयोः एतादृशं वार्तालापं श्रुत्वा आश्चर्यम् अनुभवन् राक्षसः - "अद्यावधि मया मद्दर्शनात् भीत्या पलायमानाः एव दृष्टाः। किन्तु भवन्तौ मरणार्थं स्पर्धां कुरुतः! परन्तु भवतोः मनसि एषः सन्देहः न उत्पन्नः वा यत् अहम् उभौ अपि खादेयम् इति?" इति पृष्टवान्।

तदा राजा मन्दहासपूर्वकम् उक्तवान् - "भवान् हस्तगतं शिवदत्तम् एव त्यक्तवान् इत्यतः ज्ञायते यत् भवतः युक्तायुक्तविवेकः अस्ति इति। अतः एव अहम् एकाकी भवत्समीपम् आगतवान्। अन्यथा ससैन्यम् अत्र आगच्छेयम्" इति।

एतत् श्रुत्वा सन्तुष्टः अपि राक्षसः सन्तोषम् अप्रदर्शयन् उक्तवान् - "अलं वार्तालापेन। भवतोः कतरः मया खादनीयः इति शीघ्रं निर्णयं कुरुताम्। महती बुभुक्षा मम" इति।

"महाराज! भवतः अपेक्षानुगुणं राज्यं पालयितुं सामर्थ्यं नास्ति मम। अतः भवान् एव राज्यं प्रतिगच्छतु" इति राजानम् उक्तवान् शिवदत्तः।

राजा क्षणकालं विचिन्त्य राक्षसम् उद्दिश्य - "आवयोः कतरः भवता खादनीयः इति निर्णयं कथनार्थं कश्चन कालावकाशः आवश्यकः । अतः भवता प्रतीक्षा करणीया भवेत्" इति उक्तवान् ।

"अस्तु, सद्यःकालीनस्य आहारस्य निमित्तं कामपि अन्यां व्यवस्थां कुर्याम् । भवतः निर्णयक्रमः कः इति वदतु तावत्" इति उक्तवान् राक्षसः ।

"शिवदत्तः राजधानीं प्रतिगत्य सैन्यस्य नायकत्वं वहन् मणिपुरराज्यस्य प्रचण्डस्य उपरि आक्रमणं करिष्यति । यदि शिवदत्तः जयं प्राप्नुयात् तर्हि मणिपुरस्य मम राज्यस्य च राजा सः एव स्यात् । अहं च भवतः आहारः भविष्यामि । यदि शिवदत्तः पराजितः भवेत् तर्हि सः भवतः आहारः भवेत् । अहं च राज्यं प्रतिगमिष्यामि" इति उक्तवान् राजा ।

राक्षसः एतत् अङ्गीकुर्वन् - "शिवदत्त ! विना प्रतिवचनं भवता राज्ञः एषः प्रस्तावः अङ्गीकरणीयः । भवतः प्रत्यागमनपर्यन्तं राजा मत्समीपे एव भविष्यति" इति उक्तवान् ।

शिवदत्तः राज्ञः आदेशस्य अनुगुणं ससैन्यं गत्वा प्रचण्डस्य दुर्गस्य उपरि आक्रमणं कृतवान् । सप्ताहाभ्यन्तरे एव प्रचण्डः पराजितः अभवत् । तं कारागारे स्थापितवान् शिवदत्तः ।

ततः शिवदत्तः राक्षससमीपम् आगतवान् । तेन सह काचित् सुन्दरी अपि आसीत् ।



तां दृष्ट्वा राक्षसः आश्चर्येण पृष्टवान् - "का एषा ?" इति ।

तदा शिवदत्तः उक्तवान् - "युद्धे मया पराजितस्य प्रचण्डस्य पुत्री मन्दाकिनी एषा । एषा प्रतिज्ञां कृतवती अस्ति यत् शरच्चन्द्रिकाराजम् एव परिणेष्यामि इति । अतः महाराजेन चन्द्रसेनेन एषा परिणेतव्या" इति ।

एतत् श्रुत्वा आश्चर्यम् अनुभवन् राक्षसः पृष्टवान् - "इदानीं किं करणीयम् ?" इति ।

"महाराजे विशेषानुरागवत्याः एतस्याः आशायाः भङ्गः सर्वथा न शोभते । अतः महाराजं कृपया परित्यजतु भवान् । मां च आहारत्वेन स्वीकरोतु" इति सूचितवान् शिवदत्तः ।



"राजन् ! शिवदत्तेन उक्तं श्रुतं खलु भवता अपि ? एतद्विषये किम् अभिप्रैति भवान् ?" इति महाराजं चन्द्रसेनं पृष्टवान् राक्षसः ।

"मम दर्शनम् अङ्गीकारं वा विनैव मयि अनुरागं प्राप्तवत्याः एतस्याः अनुरागः मया पुरस्करणीयः नास्ति । अन्यच्च प्रचण्डस्य जयात् एव शरच्चन्द्रिकाराज्यस्य राजत्वं प्राप्तम् अस्ति शिवदत्तेन । एतत् तु मया पूर्वम् एव उक्तम् आसीत् । मन्दाकिनी तु शरच्चन्द्रिकाराजं परिणेष्यामि इति प्रतिज्ञां कृतवती, न तु मां परिणेष्यामि इति । अतः तया शिवदत्तः परिणीतः चेत् सर्वाः समस्याः परिहृताः भविष्यन्ति" इति उक्तवान् राजा ।

तदा मन्दाकिनी राक्षसम् उक्तवती - "राक्षसोत्तम ! मम दृष्ट्या शरच्चन्द्रिकाराजः नाम चन्द्रसेनमहाराजः एव । अतः तम् एव अहं परिणेतुम् इष्टवती, न तु शिवदत्तम् । पूर्वं यत् निर्णीतं तदनुगुणम् इदानीं भवता चन्द्रसेनवर्यः एव खादनीयः खलु ? एवं तर्हि तेन सह माम् अपि खादतु भवान् । तेन सह जीवितुं तु मया अवकाशः न प्राप्तः । तेनैव सह मरणं प्राप्तुं वा अवकाशं कल्पयतु कृपया" इति ।

राजकुमार्याः मन्दाकिन्याः वचनं श्रुत्वा आश्चर्येण स्तब्धः राक्षसः क्षणकालानन्तरं मन्दाकिनीम् उद्दिश्य - "अद्यावधि मया चिन्तितम् आसीत् यत् मानवाः न केवलं शारीरकतया, अपि तु मानसिकतया अपि दुर्बलाः एव इति । मानवाः सर्वे स्वार्थपराः, सहनारहिताः, परपीडनतत्पराः च भवन्ति इति मम चिन्तनम् आसीत् । इदानीं भवतां त्रयाणां दर्शनात् मम चिन्तनम् एव परिवृत्तम् अस्ति । राजभक्त्या, भृत्यप्रेम्णा, अनुरागातिशयेन च भवन्तः दैवत्वं प्राप्तवन्तः इव दृश्यन्ते । राजनिमित्तम् आत्मार्पणं कर्तुं सिद्धं शिवदत्तं, प्राणापायम् अपि अविगणय्य सामान्यगुप्तचरस्य प्राणानां रक्षणार्थम् उद्युक्तं महाराजं चन्द्रसेनम्, अनुरागपात्रीभूतस्य राज्ञः निमित्तं प्राणान् एव अर्पयितुं सिद्धां भवतीं वा यदि अहं मारयेयं तर्हि मया अतिनिन्द्यं कार्यं कृतं भवेत् । अतः अहं सन्तोषेण भवतः त्रीन् अपि त्यजन् अस्मि । इदानीम् एव एतत् अरण्यं परित्यज्य देशान्तरं

गमिष्यामि'' इति उक्त्वा आकाशमार्गेण निर्गत्य ततः अदृश्यः अभवत् ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! शिवदत्तस्य व्यवहारस्य विषये मम केचन सन्देहाः सन्ति । यदि सः प्रभुभक्तः एव स्यात् तर्हि प्रचण्डेन सह युद्धे पराजित्य तेन राज्ञः प्राणाः रक्षणीयाः आसन् । किन्तु तेन तथा न कृतम् । युद्धे विजयः साधितः । एतेन राज्ञः राक्षसाहारत्वं निश्चितम् अभवत् । यदि मन्दाकिनीप्रसङ्गः न स्यात् तर्हि शिवदत्तः एव राजा अभविष्यत्, चन्द्रसेनः च राक्षसस्य आहारत्वं प्राप्स्यत् । एवं ननु ? किमर्थं शिवदत्तः एतादृशं व्यवहारं कृतवान् ? किं तस्य अन्तरङ्गे स्वार्थबीजम् आसीत् ? किं सः राक्षसस्य स्वभावं न जानाति स्म ? मम एतेषां सन्देहानां समाधानं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं स्यात्'' इति ।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''शिवदत्तः विचिन्त्य एव सुयोग्यं व्यवहारं प्रदर्शितवान् । यदि प्रचण्डः तेन पराजितः न स्यात् तर्हि देशस्य गौरवं धूलिसात् जातं स्यात् । अतः परमशौर्येण सः शत्रुराजं जितवान् । एतस्य फलतः राज्ञा चन्द्रसेनेन राक्षसस्य आहारत्वं प्राप्तव्यं भवेत् इति सः जानाति स्म । किन्तु सः एतदपि जानाति स्म यत् राक्षसः दयामयः इति, युक्तायुक्तताम् अविचिन्त्य कमपि न खादति इति च । अतः सः शत्रुराजजयरूपं कर्तव्यं कृतं समाप्य राक्षससमीपम् आगत्य 'माम् एव खादतु' इति निवेदितवान् । तेन यत् चिन्तनं तथैव प्रवृत्तम् अपि । मन्दाकिनीप्रसङ्गः न स्यात् चेदपि सः श्रद्धापात्रस्य राज्ञः प्राणान् तु अवश्यम् अरक्षिष्यत् एव । एवं शिवदत्तस्य प्रभुभक्तिः स्फटिकवत् सर्वथा शुद्धा एव आसीत् । तेन अल्पम् अपि अनौचित्यं न आचरितम्'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान् ।



# कीदृशी पादरक्षा रोचते भवते ?

चिकित्सार्थं चिकित्सालयं प्रविष्टवतः बन्धोः दर्शनार्थं सुरेशः कदाचित् गतवान् आसीत् । विकलमतयः एव अधिकतया तं चिकित्सालयम् आगच्छन्ति स्म ।

चिकित्सालयस्य अधिकारिणा सूचितं यत् इतः घण्टायाः अनन्तरम् एव बन्धुदर्शनं शक्यम् इति । अतः सुरेशः पार्श्वस्थस्य दीर्घपीठस्य उपरि उपविष्टवान् । तत्र अन्यः अपि उपविष्टवान् आसीत् । मौनं स्थातुम् अशक्नुवन् सुरेशः स्वपरिचयादिकम् उक्त्वा पार्श्वे उपविष्टवतः परिचयम् अपि प्राप्तवान् । ततः स्वबन्धोः मतिविकलतां निवेद्य, स्वस्य आगमनकारणम् अपि निवेद्य सः पृष्टवान् - ''भवान् अपि किं बन्धुदर्शनार्थम् आगतः ?'' इति ।

तदा पार्श्वस्थः उक्तवान् - ''अहम् अत्र चिकित्सां प्राप्नुवन् अस्मि । इतोऽपि मतिविकलतालक्षणानि कानिचन मयि सन्ति इति वदति वैद्यः'' इति ।

एतत् श्रुत्वा सुरेशः आश्चर्येण उक्तवान् - ''एवं वा ? एतावता मया भवति एकम् अपि तादृशं लक्षणं न दृष्टम् । भवान् सर्वथा मनसा स्वस्थः इत्येव भाति मम'' इति ।

तदा पार्श्वस्थः हसन् - ''वस्तुतः ममापि सा एव भावना अस्ति । अतः मम सन्देहः यत् बहूनि वर्षाणि यावत् विकलमतीनां सम्पर्कात् वैद्यस्य मतिः अपि विकला जाता स्यात् इति । तदस्तु तावत्, मह्यं तु काष्ठमयपादरक्षा न रोचते । चर्ममयी पादरक्षा एव रोचते । भवते कीदृशी रोचते ?'' इति पृष्टवान् ।

''मम तु चर्ममयी पादरक्षा एव प्रिया'' इति उक्तवान् सुरेशः ।

तदा पार्श्वस्थः पृष्टवान् - ''तां भवान् पक्त्वा खादति, उत यथास्थितम् एव खादति ?'' इति ।

पार्श्वस्थस्य स्वरूपम् एतावता सम्यक् अवगतवान् सुरेशः उत्तरं किमपि अवदन् ततः उत्थाय अन्यत्र गतवान् ।



## अस्मद्देशीयानि दुर्गाणि - ४



जयसलमेरदुर्गम्

# रजपूतदुर्गाणि - २

रचना - मीरा उषा, चित्राणि - सुलभा ठाकुर

प्रकाशमानायाः मरुभूमेः सिकतानां मध्ये पीतवर्णीयाभिः सुधाशिलाभिः निर्मितम् अस्ति जयसलमेरदुर्गम् । यदा उदयमानस्य सूर्यस्य किरणाः एतस्य दुर्गस्य उपरि पतन्ति तदा एतत् दुर्गं सुवर्णवर्णेन शोभमानं सत् द्रष्टॄणां चित्तानि आकर्षति ।

११५६ तमे वर्षे भाटीयराजः जैसालदेवः एतत् दुर्गं निर्मितवान् । एतस्य दुर्गस्य वैशिष्ट्यं यत् द्विस्तरीया दुर्गभित्तिः अस्ति एतस्य । भूमेः उपरि स्थितायाः दुर्गभित्तेः अर्धभागस्य उपरि अपरा भित्तिः प्रसारितं वस्त्रम् इव दृश्यते । अतः स्थानीयाः जनाः एतत् 'कमरकोट' इति 'पादा' इति च निर्दिशन्ति ।

एतेन दुर्गेण बहूनि युद्धानि दृष्टानि सन्ति । देहलीराजः बाल्बनः सुदीर्घकालम् (१२७६ तः १२८३ पर्यन्तम्) एतत् दुर्गम् आक्रम्य स्थितवान् आसीत् ।

जयसलमेरदुर्गं वाणिज्यकेन्द्रम् आसीत् । अफगानिस्थानम्, सिरिया, इरान्, इराक्, ईजिप्ट् इत्यादिभ्यः देशेभ्यः आगताः वणिजः एतद्दुर्गद्वारा एव गमनागमनं कुर्वन्ति स्म । १५७० तमे वर्षे भाटीयजनाः अकबरस्य मैत्री यदा सम्पादितवन्तः तदा एतत् वाणिज्यं प्रवृद्धम् । अत्र आगताः जैनवणिजः मन्दिराणि वासगृहाणि च निर्मितवन्तः । रमणीयैः

जयसलमेरदुर्गस्य सूक्ष्मकलायुक्ताः गवाक्षाः, शिलाफलकानि च ।





शिलाफलकैः, कुड्यचित्रैः, गवाक्षैः च युतानि तानि भवनानि इदानीम् अपि प्रसिद्धानि सन्ति।

राजस्थाने स्थितेषु दुर्गेषु आधुनिकम् अस्ति बिकानेरस्थं जुनागढदुर्गम्। एतत् १५९४ तमे वर्षे निर्मितम्। एतस्य परिरक्षणं सम्यक्प्रकारेण जातम् अस्ति। भवनस्य अन्तः भित्तिषु शिलाभिः निर्मितानि रमणीयानि वातायनानि कुड्यचित्राणि च सन्ति। गवाक्षस्थानि शिलाफलकानि मरुभूमितः आगच्छन्तम् उष्णवायुं निवारयन्ति भवनस्य शैत्यं रक्षन्ति स्म।



जुनागढदुर्गम्



बिकानेरराजभवनस्य अन्तर्भागस्य दृश्यम्

जयपुरसमीपस्थम् 'अम्बरगढ' दुर्गम् 'कछावाहा' राजाः निर्मितवन्तः। एतस्य अन्तः सुन्दराणि भवनानि सन्ति।

अत्रैव जयगढ, नाहरगढ इत्येतयोः दुर्गयोः निर्माणम् अपि अभवत्। एतानि त्रीणि अपि दुर्गाणि आक्रमणेन युद्धेन वा कदापि पीडितानि न आसन्।

'जयगढ' दुर्गं 'चील्वा' पर्वतस्य उपरि निर्मितम् आसीत्। एतस्मिन् दुर्गे अग्न्यस्त्राणां निर्माणं प्रचलति स्म। अम्बरकोट्टतः एतत् दुर्गं प्राप्तुं कश्चन सुरङ्गमार्गः अपि आसीत्।

एतस्य दुर्गस्य अन्तः प्रकोष्ठेषु राजपरिवारस्य निधिः संरक्ष्यते स्म । एतत्पर्वतप्रदेशे निवसन्तः 'मीना' जातीयाः एतस्य निधेः रक्षणं कुर्वन्ति स्म । आवश्यकता यदा आपतति तदा राजा स्वयम् आगत्य निधिं नयति स्म । तत्समये 'मीना' जनानां नायकः पट्टिकया राज्ञः नेत्रे बद्ध्वा राजानं निधिसमीपं नयति स्म । राजा यथितः यावत् आवश्यकं तावत् धनं नयति स्म ।

अस्माकं देशस्थेषु अग्न्यस्त्रेषु महाकारकम् इति ख्यातं जैवाननामकम् अग्न्यस्त्रम् एतस्मिन् एव दुर्गे अस्ति । एकवारम् एव एतस्य उपयोगः कृतः आसीत् इति श्रूयते ।

१७३२ तमे वर्षे सूरजमल्लनामकः जाटराजः लोहगढदुर्गं निर्मितवान् । एतद् दुर्गं तत्रैव निर्मितं, यत्र च पूर्वं भरतपुरदुर्गम् आसीत् । यद्यपि एतस्य दुर्गस्य रक्षणाभित्तिः मृत्तिकया एव निर्मिता आसीत् तथापि सा अग्न्यस्त्रप्रहारम् अपि सोढुं शक्ता आसीत् ।

१८२५ तमवर्षस्य नवम्बरमासे ईस्ट् इण्डिया कम्पनी २७,००० सैनिकैः सह आगत्य एतस्य दुर्गस्य उपरि आक्रमणम् अकरोत् ।

६४,४४६ सङ्ख्याकानि अग्न्यस्त्राणि एतत् लक्ष्यीकृत्य प्रयुक्तानि चेदपि एतद् दुर्गं शत्रुवशं न जातम् । अन्ते शत्रुसैनिकैः उत्तरदिशि स्थिता भित्तिः अग्न्यस्त्रप्रहारेण पातिता । एतत्कार्यार्थं तैः २०,००० पौण्ड्परिमितं विस्फोटकद्रव्यम् उपयुक्तम् आसीत् । एतस्मात् विस्फोटात् उत्पन्नः ध्वनिः आगरानगरीयैः अपि श्रुतः । १८२६ तमे वर्षे



जयगढदुर्गस्य पर्यवेक्षणगोपुरम्



जैवाननामकम् अग्न्यस्त्रम्



लोहगढदुर्गम्

जनवरीमासस्य १८ दिनाङ्के भरतपुरदुर्गस्य पतनं जातम् ।

१२४१ वर्षे देवसिङ्गनामकः हाडाजननायकः मीनाजातीयानां नायकं बुण्डूनामकं जितवान्, 'हडौती' राज्यस्य स्थापनं कृतवान् च । तस्य राजधानी बुण्डि । तस्य प्रपौत्रः रावबारसिङ्गः १३५२ तमे वर्षे तारागढनामकं दुर्गं निर्मितवान् । तद्वंशीयाः ६०० वर्षाणि यावत् निरातङ्कम् एतत् राज्यं पालितवन्तः ।

हाडासैनिकानां शौर्यविषये बह्व्यः कथाः श्रूयन्ते । तासु काचित् कथा एवम् अस्ति - उदयपुरस्य राजा राणालखानामकः कदाचित् प्रतिज्ञां कृतवान् आसीत् यत् यावत् बुण्डिदुर्गं मद्वशं न भविष्यति तावत् अहम् आहारसेवनं न करिष्यामि इति । उपवासकारणतः क्षीणकायस्य राज्ञः स्वास्थ्यं नष्टं जातम् । अतः सेनापतयः एकं कृत्रिमं दुर्गं निर्माय राजानम् उक्तवन्तः यत् भवान् एतत् दुर्गं जयतु इति । तस्य कृत्रिमदुर्गस्य रक्षणदायित्वं हाडाजातीयाय कुम्भनामकाय दत्तम् आसीत् । सः सूचितः आसीत् यत् यदा राजा आगमिष्यति तदा पराजयः अङ्गीकरणीयः इति । राजा कैश्चित् सैनिकैः सह गत्वा कृत्रिमदुर्गस्य उपरि आक्रमणं कृतवान् । तदा कृत्रिमदुर्गतः बाणधारा निर्गता । क्रोधेन आश्चर्येण च युक्ताः राज्ञः सैनिकाः दुर्गस्य अन्तः यदा गतवन्तः तदा कुम्भः खड्गप्रहारम् आरब्धवान् । सैनिकान् उक्तवान् च - ''एतत् दुर्गं कृत्रिमं स्यात् नाम, किन्तु हाडाकुलीयः सैनिकः अहं न कृत्रिमः । यावत् शरीरे प्राणाः तिष्ठन्ति तावत् एतस्य दुर्गस्य रक्षणं मम कर्तव्यम्'' इति । एतत्सर्वं प्रत्यक्षं दृष्टवतः राज्ञः मनः परिवृत्तम् अभवत् । हाडाजातीयैः पाल्यमानस्य बुण्डिदुर्गस्य वशीकरणविचारं सः परित्यक्तवान् ।



कृत्रिमम् आक्रमणम्

'रागमाला', 'बारामसा' इत्यादीनां प्रसिद्धचित्राणां निर्मातारः बुण्डिदुर्गे वासं कुर्वन्ति स्म इति श्रूयते ।

'तारागढ' दुर्गम्



# पिशाचेभ्यः रक्षणम्

रामभद्रपुरनामके ग्रामे महाबलः नाम सुविख्यातः मान्त्रिकः आसीत् । जनाः वदन्ति स्म यत् महाबलस्य नाम्नः श्रवणात् एव भूतप्रेतपिशाचाः पलायनं कुर्वन्ति इति । महाबलस्य पत्नी अन्नपूर्णा । सा अन्वर्थनामधेया गृहिणी । अन्नदानादिषु तस्याः विशेषाभिरुचिः । किन्तु महाबलस्य स्वभावः सर्वथा एतद्विरुद्धः । गृहे कृतस्य पाकस्य गन्धः मार्गपर्यन्तं गच्छति चेदपि तस्य असन्तोषः । गन्धम् आघ्राय अतिथयः यदि गृहम् आगच्छेयुः तर्हि कष्टम् इति तस्य चिन्तनम् ।

कदाचित् सायङ्काले चत्वारः अन्नपूर्णायाः गृहम् आगतवन्तः । ते तस्याः मातृकुलसम्बन्धितया बान्धवाः एव भवन्ति । ते अन्नपूर्णां निवेदितवन्तः - ''सुदूरात् आगताः स्मः । इतोऽपि सुदूरं गन्तव्यम् अपि । निरन्तरगमनात् वयं सर्वे श्रान्ताः बुभुक्षिताः च स्मः । अतः रात्रिभोजनार्थं यदि अत्र व्यवस्था स्यात् तर्हि भोजनं कृत्वा वयम् इतः निर्गच्छेम'' इति ।

''भवतु नाम । भवन्तः अत्रैव उपविश्य किञ्चित् विश्रान्तिसुखम् अनुभवन्तु । तावता अहं पाकं सज्जीकरिष्यामि'' इति उक्त्वा अन्तः गतवती अन्नपूर्णा ।

महाबलः दूरस्थं ग्रामं प्रति भूतोच्चाटनार्थं गतवान् आसीत् । तस्य प्रत्यागमनात् पूर्वम् अतिथिभ्यः भोजनं दातव्यम् इति अन्नपूर्णायाः योजना आसीत् । 'यदि अतिथीनां भोजनात् पूर्वं पतिः प्रत्यागच्छेत् तर्हि अतिथिभिः दण्डप्रहारः अपि प्राप्तव्यः भवेत्' इति जानाति स्म सा । अतः त्वरया पाकं कृत्वा सा अतिथीन् भोजनार्थम् उपवेशितवती । वातायनानि पिधाय मार्गपार्श्वस्थात् वातायनात् आतङ्कमिश्रितां दृष्टिं प्रसारयन्ती सा परिवेषयति स्म ।

''श्रीमाता''



अतिथयः सन्तोषेण भोजनं कुर्वन्तः आसन् ।

अत्रान्तरे ग्रामशुनकानां भषणध्वनिः श्रुतः । एतस्मात् एव अन्नपूर्णा ऊहितवती यत् पतिः प्रत्यागतः एव इति ।

तावता महाबलस्य उग्रध्वनिः अपि श्रुतः – "धिक् एतान् वराकान् शुनकान् ! परिचितापरिचितभेदं विना भषन्ति एते !! आ बाल्यात् अत्रैव वसन्तं भूतपतिं महाबलं मां किम् एते न जानन्ति ? धिक् धिक् एतान् !" इति ।

अतिथीनां भोजनस्य अन्तिमघट्टः प्रचलन् आसीत् । तदा अन्नपूर्णा वातायनं पिधाय – "मान्याः ! त्वरया भोजनं समापयन्तु भवन्तः । यतः उग्रकोपी मम पतिः आगच्छन् अस्ति । तस्य कोपः कीदृशः घोरः इति अहं, मद्ग्रामीणाः, पिशाचाः च जानीमः । सः गृहे भोजनमग्नान् भवतः यदि पश्येत् तर्हि भवतः सर्वान् मां च दण्डेन निर्दयं प्रहरेत् । अतः अहं वाटिकायां भवामि । भोजनसमाप्तिपर्यन्तं द्वारं मा उद्घाटयन्तु भवन्तः । भोजनं समाप्य दीपं निर्वाप्य द्वारम् उद्घाटय वेगेन पलायनं कुर्वन्तु । बहिः घोरान्धकारः, यतः अद्य अमावास्या । अतः धावनसमये जागरूकता भवतु" इति उक्तवती, वेगेन वाटिकां प्रति गतवती च ।

गृहं प्रति आगतः महाबलः द्वित्रवारं द्वारशब्दं कृतवान् । 'अये अन्नपूर्णे !' इति आहूतवान् च । तथापि द्वारं तु न उद्घाटितम् । ततः नितरां कुपितः सः द्वारं पादेन बलात् प्रहृतवान् । ततः द्वारं सशब्दम् उद्घाटितम् अभवत् । गृहस्य अन्तः अन्धकारः प्रसृतः आसीत् । 'किमर्थम् एवम् ?' इति महाबलः यावत् चिन्तयन् अन्तः पदं स्थापयन् आसीत् तावता त्रिचतुराः पुरुषाकाराः अन्धकारे एव तस्य समीपम् आगताः । तं हस्तेन पार्श्वे अपसार्य बहिः निर्गत्य अन्धकारे अदृश्याः अभवन् च ।

पुरुषाकारैः कृतात् नोदनात् पतितः महाबलः – 'हा हन्त ! किम् एते मनुष्याः उत पिशाचाः !' इति स्वगतं वदन् उत्थातुं प्रयत्नं कुर्वन् – "अये वराके ! क्व तिष्ठति भवती ?" इति उच्चैः आक्रोशनं कृतवान् ।

"एषा अहम् आगता" इति वदन्ती अन्नपूर्णा त्वरया दीपं ज्वालयित्वा पत्युः

समीपम् आगत्य - "किम् एतत् ! शिरसि भोजनपत्रम् ! वक्षस्य उपरि व्यञ्जन-क्वथितादयः !! हुं, सर्वाः तेषाम् एव दुश्चेष्टाः !" इति खेदाश्चर्यमिश्रितस्वरेण उक्तवती।

तावता हस्तावलम्बनपूर्वकम् उत्थाय - 'तेषां नाम केषां दुश्चेष्टाः ?' इति पृच्छन् गृहस्य अन्तः आगतवान् महाबलः। तत्र भूमौ अन्नव्यञ्जनादयः सर्वत्र विकीर्णाः आसन्।

तत्सर्वं दृष्ट्वा महाबलः क्रोधेन - "अये दुष्टे ! मम अनुपस्थितौ मार्गे गच्छतः जनान् आहूय उत्सवम् आचरन्ती अस्ति वा भवती ? कुतो वा भवती न मारणीया मया ?" इति पत्नीं वदन् प्रहर्तुं दण्डम् उन्नीतवान्।

पत्युः कोपम् अपरिगणयन्ती अन्नपूर्णा दीपं पीठस्य उपरि स्थापयन्ती - "न जाने प्रातः उत्थाय मया कः देवः स्मृतः इति, दैवानुग्रहात् एव मम सुमङ्गलीत्वं रक्षितम् अभवत्" इति उक्तवती।

"मम अनुपस्थितौ अन्नदानोत्सवः कृतः वा इति मया पृष्टे, सौभाग्यात् सुमङ्गलीत्वं रक्षितम् अभवत् इति वदति खलु भवती ! किम् एतत् ?" इति आश्चर्येण पृष्टवान् महाबलः।

अन्नपूर्णा वस्त्राञ्चलेन अश्रुमार्जनम् अभिनयन्ती - "इदानीं प्रश्नेन चिन्तनेन वा किं प्रयोजनम् ? यदि भवान् पिशाचोच्चाटनविद्यायाः ऋते वाणिज्यं कृषिं वा ज्ञातवान् स्यात् तर्हि वरम् अभविष्यत्" इति सगद्गदम् उक्तवती।



तदा महाबलः असन्तोषेण - "मया पृष्टस्य प्रश्नस्य साक्षात् उत्तरदाने कः क्लेशः भवत्याः ? किमर्थम् एवं पिशाचाविष्टा इव किमपि किमपि जल्पति भवती ?" इति पृष्टवान्।

"हुं, एवम् एव अनुवर्तते चेत् पिशाचाः अपि कदाचित् मयि आविष्टाः भवेयुः एव। भवान् अन्यग्रामान् गत्वा पिशाचान् उच्चाटयन् भवति। तथा भवता उच्चाटितेषु केचन पिशाचाः अद्य अत्र आगताः आसन्। ते माम् अवाच्यैः शब्दैः निन्दन्तः - 'अये महाबलस्य सहधर्मिणि ! वयम् अपूरिताः आशाः पूरयितुं, विविधानि खाद्यानि खादितुं च मानवानां शरीराणि प्रविशामः। सः दुष्टः भवत्याः पतिः कैश्चित् क्षुद्रकैः

मन्त्रैः अस्मान् निराश्रयान् करोति । अद्य सः अत्र आगच्छतु नाम ! गृहं प्रविश्य सः ताडपत्राणि निम्बशलाकागुच्छं च यदा भूमौ स्थापयिष्यति तदा वयं तम् आक्रम्य खादिष्यामः । तदा एव अस्माकं तृप्तिः' इति वदन्तः गृहस्य मध्यभागे उपविष्टवन्तः आसन्'' इति भीतिमिश्रितेन स्वरेण उक्तवती अन्नपूर्णा ।

एतत् श्रुत्वा महाबलः शिथिलां शिखां बध्नन् महता कोपेन – ''कुत्र ते पिशाचाः ? क्व गताः ते ?'' इति पृच्छन् मन्त्रोच्चारणम् आरब्धवान् ।

''किम् इदानीं मन्त्रोच्चारणेन ? ते तु अद्य आदिनं मां पीडितवन्तः । 'वयं बुभुक्षिताः स्मः । पाकं करोतु' इति आदिष्टवन्तः । अहं विधेयतया पाकं कृत्वा तेषां पुरतः स्थापितवती । एतेन ते मयि किञ्चित् प्रसन्नाः जाताः । यदा ते भोजनं कुर्वन्तः आसन् तदा अहं तान् प्रार्थितवती – 'कृपया मम सुमङ्गलीत्वं रक्षन्तु' इति । सर्वे अङ्गीकारपूर्वकं शिरः चालितवन्तः । किन्तु एकः पङ्गुः पिशाचः क्रोधेन उत्थाय – 'यावत् भवत्याः पतिं तप्ततैलभाण्डे पातयित्वा पक्त्वा न खादिष्यामि तावत् भैरवपुरस्य कालभैरवस्य मम न तृप्तिः' इति आक्रोशनम् अकरोत् । तावता अकस्मात् भवतः आगमनं जातम् । मद्विषयककरुणया, भवतः भीत्या वा ते सर्वे पलायिताः । सः पङ्गुपिशाचः एव भवन्तं पातयित्वा भवच्छिरसि अन्नादिकं पातितवान् स्यात्'' इति उक्तवती अन्नपूर्णा ।

''किम् ? भैरवपुरस्य कालभैरवपिशाचः अपि तेषु आसीत् वा ? अहो, महाप्रचण्डः पिशाचः सः ! एवं तर्हि दैवबलात् एव अद्य अहं रक्षितः अभवम्'' इति वदन् कमपि मन्त्रम् उच्चारयन् महाबलः पूजागृहं प्रविश्य द्वारपिधानं कृतवान् ।

अन्नपूर्णा अपि – ''भोः, करुणालवः पिशाचाः ! अनन्यगतिकतया मया भवत्सु मिथ्यारोपः कृतः यत् तदर्थम् अहं क्षन्तव्या कृपया'' इति मनसि एव प्रार्थयन्ती पाकशालां प्रविष्टवती ।





# कर्मकरस्य बुद्धिमत्ता

रङ्गपुरनामके ग्रामे भूपतिः नाम कश्चन कृषिकः आसीत् । कदाचित् तस्मै एकस्य कर्मकरस्य आवश्यकता आगता । एतं विषयं सः स्वमित्रं गणपतिम् उक्तवान् । तदा गणपतिः उक्तवान् - ''मम सकाशे उभौ कर्मकरौ स्तः । उभौ अपि प्रामाणिकौ उत्तमौ च । तयोः एकः महाबुद्धिमान् । किन्तु कार्ये तस्य श्रद्धा न्यूना । सः अधिकं वेतनम् इच्छति अपि । अपरः अधिकं वेतनं न इच्छति, कार्यम् अपि श्रद्धया करोति । किन्तु सः मन्दमतिः । एतयोः कम् इच्छति भवान् ? यं भवान् इच्छति तं भवद्गृहम् अहं प्रेषयिष्यामि'' इति ।

तदा किञ्चित् विचिन्त्य भूपतिः उक्तवान् - ''यस्य कार्यविषये श्रद्धा अस्ति सः प्रामाणिकः न्यूनवेतनेन एव तृप्तः च खलु ? अतः तम् एव प्रेषयतु'' इति । एतेन प्रकारेण शङ्करः भूपतेः गृहस्य कार्ये नियोजितः अभवत् । मासं यावत् शङ्करेण कृतं कार्यं दृष्ट्वा भूपतिः सन्तुष्टः अभवत् अपि ।

अथ कदाचित् नगरवासिनी भूपतेः पुत्री एकं पत्रं प्रेषितवती । पत्रे लिखितम् आसीत् - ''मम ननान्दुः विवाहः निश्चितः अस्ति । वरपक्षीयाः जम्बीरवर्णीयं कौशेयशाटिकाद्वयम् इच्छन्ति । अस्माकं ग्रामे वीरभद्रः कौशेयशाटिकायाः निर्माणे निपुणः खलु ? अतः तद्द्वारा कौशेयशाटिकाद्वयं क्रीत्वा आगामिशनिवासराभ्यन्तरे प्रेषयतु'' इति ।

पत्रवाहकः भूपतये पत्रं दत्त्वा उक्तवान् - ''अहम् अद्य एव नगरं प्रतिगमिष्यामि । अतः शाटिकाद्वयम् अद्यैव प्राप्यते चेत् अहम् एव नेष्यामि'' इति ।

भूपतिः झटिति स्वसेवकं वीरभद्रगृहं



प्रति प्रेषितवान् । वीरभद्रः वार्ता प्रेषितवान् - ''जम्बीरवर्णीयाः कौशेय-शाटिकाः इदानीं सिद्धाः न सन्ति । अपेक्षितस्य वर्णस्य योजनार्थं दिनद्वयम् आवश्यकम् । अतः दिनद्वयानन्तरं जम्बीरवर्णीयं शाटिकाद्वयं दास्यामि'' इति ।

एतं विषयं पत्रवाहकं संसूच्य उक्तवान् भूपतिः - ''मम पुत्री वदतु यत् शनिवासराभ्यन्तरे शाटिका प्रापयिष्यते इति'' इति ।

ततः सः शङ्करम् आहूय प्रवृत्तं सर्वं निवेद्य - ''शनिवासराभ्यन्तरे नगरस्थायाः मम पुत्र्याः गृहं गन्तव्यं भवता । स्मरतु एतत्'' इति सूचितवान् ।

''तत्राम शुक्रवासरे सायङ्काले इतः प्रस्थातव्यं ननु ? अहं तु एतदर्थं सिद्धः अस्मि'' इति उक्तवान् शङ्करः ।

ततः गुरुवासरः अतीतः । शुक्रवासरे आदिनं वृष्टिः आगता । सायं वृष्टेः स्थगनानन्तरं वीरभद्रः जम्बीरवर्णीयं कौशेयशाटिकाद्वयं भूपतये दत्त्वा - ''शाटिकाद्वये जम्बीरवर्णः योजितः अस्ति । वर्णः इतोऽपि न शुष्कः । अहं तु जागरूकतया आनीतवान् अस्मि । एकं दिनं यावत् एतयोः शाटिकयोः आर्द्रताबाधा यथा न स्यात् तथा जागरूकता आश्रयणीया'' इति उक्त्वा निर्गतवान् ।

ततः भूपतिः शङ्करम् आहूय - ''एतत् शाटिकाद्वयं वृष्टिजलेन आर्द्रं न भवेत् । यदि आर्द्रता प्राप्यते तर्हि वर्णः अपगतः भवेत् । अतः जागरूकतया एतत् शाटिकाद्वयं रक्षन् नगरं गच्छतु'' इति ।

''स्वामिन् ! अलं चिन्तया । एतयोः उपरि जलबिन्दुः अपि यथा न पतेत् तथा रक्षिष्यामि । गृहे भोजनं समाप्य ततः एव नगरं गमिष्यामि च'' इति उक्त्वा स्वामिनः अनुज्ञां प्राप्य शाटिकाद्वयं स्वीकृत्य गृहं गतवान् शङ्करः ।

ततः भूपतेः पत्नी पतिम् उक्तवती - ''युक्ते समये अपेक्षितवर्णयुक्तस्य कौशेयशाटिकाद्वयस्य प्राप्त्या पुत्र्याः गृहस्य सदस्याः सर्वे सन्तुष्टाः भवेयुः'' इति ।

''सत्यम् एतत् । यद्यपि अद्य वृष्टिः, तथापि शङ्करः नगरं गन्तुं सिद्धः अस्ति । अतः शङ्करस्य स्वीकारेण मया युक्तम् एव

कृतम् । अन्यथा श्वः प्रातः मया एव नगरं गत्वा शाटिका दातव्या अभविष्यत्'' इति उक्तवान् भूपतिः ।

अत्रान्तरे पार्श्वगृहे कोऽपि कोलाहलः श्रुतः । भूपतिः तत्पत्नी च तत्र गतवन्तौ । प्रतिवेशिनः वेङ्कटेश्वरस्य पिता सीतारामः अकस्मात् हृदयवेदनां प्राप्तवान् आसीत् । झटिति वैद्यः आनायितः । वैद्यः सीतारामार्यं परीक्ष्य उक्तवान् – ''एतस्य चिकित्सार्थं योग्यम् औषधं, साधनं वा मम समीपे नास्ति । अतः एतं नगरं नयन्तु भवन्तः'' इति ।

भूपतेः परिचिताः वैद्याः नगरे बहवः आसन् । तस्य पुत्र्याः गृहम् अपि नगरे एव अस्ति अपि खलु ? अतः सः वेङ्कटेश्वरस्य साहाय्यार्थं नगरं गन्तुम् उद्युक्तः । ततः सर्वे सीतारामवर्यं शकटे आरोप्य नगरं प्रति प्रस्थितवन्तः । 'अहं कथञ्चित् नगरं गच्छन् अस्मि । अतः एतावता अपि शङ्करः स्वगृहात् न प्रस्थितः चेत् नगरं प्रति तस्य गमनं न आवश्यकम्' इति चिन्तयन् भूपतिः शङ्करगृहसमीपे शकटं स्थगयितुं सूचितवान् । शङ्करस्य पत्नी उक्तवती यत् अर्धघण्टातः पूर्वं शङ्करः गृहात् प्रस्थितः इति । पादाभ्यां गमनार्थं यः मार्गः आसीत्, तस्मात् भिन्नः आसीत् शकटमार्गः । अतः 'शङ्करस्य मेलनार्थं न अवकाशः' इति निश्चितवान् भूपतिः । ततः शकटं वेगेन नगरं प्रति प्रस्थितम् । नगरे योग्यः वैद्यः दृष्टः तैः । वैद्यः सीतारामवर्यं परीक्ष्य उक्तवान् यत्



भीतिः प्राप्तव्या नास्ति, द्वित्राणि दिनानि चिकित्सालये स्थातव्यं, तावदेव इति । एतदर्थं व्यवस्थां कृत्वा भूपतिः पुत्र्याः गृहं गतवान् ।

आगतं पितरं दृष्ट्वा पुत्री सन्तोषेण – ''भवता एव किमर्थम् आगतम् ? शाटिकाद्वयं सेवकद्वारा प्रेषितं चेत् काऽपि आपत्तिः न अभविष्यत् खलु ?'' इति उक्तवती ।

तदा भूपतिः प्रवृत्तं सर्वं निवेद्य – ''एवं तर्हि शङ्करः इतोऽपि अत्र न आगतः । पादाभ्याम् आगमनं खलु तस्य ? अतः प्रायो किञ्चित् विलम्बः स्यात् अपि'' इति उक्तवान् ।

ततः घण्टाभ्यन्तरे शङ्करः तत्र

उपस्थितः। सः वृष्ट्या नितराम् आर्द्रः जातः आसीत्।

"वृष्ट्या आर्द्रः खलु भवान्? मध्येमार्गं वृष्टिः प्राप्ता चेत् कुत्रापि किञ्चित् विश्रम्य प्रस्थातव्यं खलु भवता?" इति उक्तवान् भूपतिः।

"श्रीमन्! शनिवासरे प्रातः पुत्र्याः गृहं प्राप्तव्यम् इति खलु आसीत् भवतः आदेशः? आदेशपालनसमये अहं चण्डमारुतम् अपि न परिगणयामि। एवं स्थिते का कथा वृष्ट्याः!" इति सगर्वम् उक्तवान् शङ्करः।

"तदस्तु तावत्। आगमनसमये शाटिका वृष्ट्या आर्द्रा तु न जाता खलु?" इति आतङ्कमिश्रितेन स्वरेण पृष्टवान् भूपतिः।

"भवतः वचनं सर्वथा शिरोधार्यं मम। शाटिकायाः उपरि एकः जलबिन्दुः अपि यथा न पतेत् तथा व्यवस्था कृता अस्ति मया। मम प्रस्थानसमये एव आकाशात् केचन वृष्टिबिन्दवः पतन्तः आसन्। अतः शाटिकाद्वयम् अपि पेटिकायां स्थापयित्वा, पेटिकां च गृहस्य अन्तः मञ्चस्य अधः स्थापितवान् अस्मि। वृष्टिबिन्दुस्पर्शः अपि न भवति तत्र" इति उक्तवान् शङ्करः।

एतत् श्रुत्वा तत्र स्थिताः सर्वे हसितवन्तः। ततः लज्जाम् अनुभवन् भूपतिः शकटेन स्वयं प्रस्थाय ग्रामं प्रतिगत्य शाटिकाम् आनीय पुत्र्यै दत्तवान्। शुभकार्यं निर्विघ्नं सम्पन्नम्।

गृहम् आगतः भूपतिः मित्रं गणपतिम् आहूय - "अधिकवेतनदानभीत्या मया शङ्करः स्वीकृतः। एतस्य कार्यश्रद्धा, प्रामाणिकता इत्यादयः प्रशंसार्हाः एव। किन्तु मन्दमतित्वं बाधकम् अस्ति। तथापि एतं न त्यजामि। उद्यानकार्ये पशुपालनकार्ये वा एतं योजयिष्यामि। किन्तु केषाञ्चित् कार्याणां निर्वहणार्थं बुद्धिमतः साहाय्यम् अपि आवश्यकं मम। अतः अपरम् अपि मत्समीपं प्रेषयतु। तस्मै योग्यं वेतनं दास्यामि अहम्" इति।

एतत् अङ्गीकुर्वन् गणपतिः अपरं कर्मकरम् अपि भूपतेः गृहं प्रति प्रेषितवान्।







# महाभारतम्

आश्रयं दत्तवतः ब्राह्मणस्य कुटुम्बस्य सदस्याः किमर्थं रोदनं कुर्वन्ति इति ज्ञातुम् आगतां कुन्तीदेवीम् उद्दिश्य ब्राह्मणः रुदन् उक्तवान् - "एतस्मिन् प्रपञ्चे पत्नीपुत्रादिभिः सह सुखेन वासः मम ललाटे न लिखितः । तस्मै दुष्टराक्षसाय कं बलिं दद्याम् ? एतावत्पर्यन्तं या मम सहगामिनी अनुकूला च आसीत् ताम् अहं राक्षसाय किम् अर्पयेयम् ? अथवा वंशोद्धारकं पुत्रं समर्पयामि ? उत नेत्रानन्दकरीं पुत्रीं तस्मै अर्पयामि ? हा धिक् कष्टम् ! सर्वं विचिन्त्य मया निर्णीतम् अस्ति यत् मया एव राक्षससमीपं गन्तव्यम् इति । अन्यः मार्गः नास्ति इदानीम्" इति ।

एतत् निराकुर्वती उक्तवती ब्राह्मणस्य पत्नी - "भवान् एव न भवति चेत् पुत्राणां मम च पोषकः रक्षकः वा कः स्यात् ? पुत्र्याः पुत्रस्य च पोषणे मम कथं सामर्थ्यं स्यात् ? पिता नास्ति चेत् पुत्राः सर्वथा अनाथाः भवन्ति । किन्तु मातुः अभावे तादृशी स्थितिः न भवति । अन्यच्च, अन्या अपि काचित् आशा मम अस्ति यत् यदि अहं राक्षससमीपं गच्छेयं तर्हि स्त्रीहत्याभीत्या सः मां परित्यजेत् अपि इति । अतः अहम् एव राक्षससमीपं गमिष्यामि" इति ।

एतत् वचनं श्रुत्वा पत्नीवियोगः तस्मिन् एव क्षणे आगतः इत्येव भावयन् इव ब्राह्मणः पत्नीं दृढम् आलिङ्गितवान् । उभौ अपि उच्चैः रोदनं कृतवन्तौ । एतत् दृष्ट्वा पुत्री उक्तवती - "किमर्थं वृथा चिन्ता रोदनं वा भवतोः ? मां



राक्षससमीपं प्रेषयन्तु । कन्या तु सर्वदा परकीया एव खलु ? परगृहं गमिष्यन्ती अहम् अग्रे वा भवतोः दुःखस्य कारणं भवेयम् एव । अतः अद्यैव मां प्रेषयन्तु । तेन न काऽपि हानिः भवतां, प्रत्युतः अपायस्य अपगमात् लाभः एव'' इति ।

तावता पञ्चवर्षीयः बालकः एकां शलाकां खड्गरूपेण चालयन् स्वबाल-भाषया - ''तं दुष्टं राक्षसम् अहम् एव मारयिष्यामि । ततः सर्वेषां चिन्ता परिहृता भविष्यति'' इति साभिनयम् उक्तवान् । तस्मिन् घोरविपत्तिकाले अपि एतत् वचनं श्रुतवतां सर्वेषां मुखे हासः समुद्भूतः ।

एतत्सर्वं दृष्ट्वा श्रुत्वा च कुन्ती ब्राह्मणम् उक्तवती - ''एतावता अपि का समस्या भवताम् इत्येव न ज्ञातं मया । यदि समस्या विस्तरेण उच्यते तर्हि अहं यथाशक्ति साहाय्यं करिष्यामि'' इति ।

तदा ब्राह्मणः कुन्तीम् उद्दिश्य उक्तवान् - ''अम्ब ! एषा विपत्तिः घोरा अस्ति । सद्वचनैः सद्व्यवहारेण वा एषा निवारयितुं न शक्या । एतस्मात् नगरात् अनतिदूरे बको नाम राक्षसः निवसति । सः प्रतिदिनं नरमांसं खादन् महतीं पुष्टिं प्राप्तवान् अस्ति । एतस्य नगरस्य रक्षकः एव सः । रक्षकस्य तस्य भक्षणाय प्रतिदिनम् एकः मनुष्यः विंशतिशकटपरिमितम् अन्नं, वृषभद्वयं च प्रेषणीयम् । पर्यायक्रमेण एकैकस्मिन् दिने एकैकस्मात् गृहात् एकैकः प्रेष्यते । यस्मिन् दिने कोऽपि न प्रेष्यते तस्मिन् दिने सः राक्षसः नगरं प्रविश्य जनान् मारयिष्यति । यद्यपि एतस्य देशस्य अपि कश्चन राजा अस्ति, तथापि वयम् अरक्षिताः स्मः । नितरां दुर्बलः सः प्रजानां रक्षणे प्रयत्नम् एव न करोति । अद्य मम गृहस्य पर्यायः । यदि अस्माकं राजाश्रयः स्यात्, धनिकत्वं वा स्यात् तर्हि कञ्चित् क्रीत्वा राक्षससमीपं प्रेषयितुम् अशक्ष्याम । किन्तु किं करवाम, तादृशं सामर्थ्यं नास्ति अस्माकम् । घोरात् एतस्मात् अपायात् कुटुम्बस्य रक्षणार्थं नास्ति कोऽपि उपायः । अतः वयं चत्वारः अपि युगपत् गत्वा राक्षसस्य आहारः भविष्यामः'' इति ।

तदा कुन्ती उक्तवती - ''विप्रवर्य ! अलं चिन्तया । अद्य राक्षससमीपं मम पुत्रः

गमिष्यति । सः महाशक्तिशाली । तं राक्षसः मारयितुं न शक्नोति । प्रत्युत मम पुत्रः एव तं संहरिष्यति । अन्यच्च मम पुत्रः मन्त्रशक्तियुक्तः अस्ति अपि । अतः एव विना भीतिं पुत्रं प्रेषयितुं सिद्धा अस्मि । यदि एवं न स्यात् तर्हि केन वा धैर्येण अहं पुत्रं राक्षससमीपं प्रेषयेयम् ? सहस्रपुत्रवती अपि माता एकम् अपि पुत्रं मृत्युदेवतायै अर्पयितुं न अर्हति खलु ? मम पुत्रस्य सामर्थ्यविषये सन्देहः मास्तु भवताम् । मम पुत्रस्य प्रेषणम् अङ्गीकुर्वन्तु भवन्तः । किन्तु एषा वार्ता ग्रामे कुत्रापि न वक्तव्या । यदि तस्य गुरुवर्यः एतां वार्तां जानीयात् तर्हि सः कदाचित् वदेत् यत् एषः प्रयत्नः मास्तु इति । तदा राक्षसस्य संहारार्थम् अवसरः एव न भवेत्'' इति ।



कुन्त्याः वचनेषु ब्राह्मणस्य विश्वासः उत्पन्नः । महती विपत्तिः अपगता इति सन्तुष्टः अभवत् सः । उपकारपूर्वकम् ऋणात् मुक्तिं प्राप्तुम् अवकाशः प्राप्तः इति कुन्ती अपि सन्तुष्टा । सा भीमसमीपं गत्वा प्रवृत्तं समग्रं निवेदितवती । भीमः एतं प्रस्तावं सहर्षम् अङ्गीकृतवान् ।

अत्रान्तरे भिक्षां समाप्य धर्मराजादयः प्रत्यागताः । महता सन्तोषेण व्यवहरन्तं भीमं दृष्ट्वा धर्मराजः कुन्तीं पृष्टवान् - ''भीमस्य एतावतः सन्तोषस्य कारणं किम् ?'' इति ।

तदा कुन्ती प्रवृत्तं निवेद्य उक्तवती - ''तेन कुटुम्बेन वासदानेन यः उपकारः कृतः तस्य प्रत्युपकारं कर्तुम् एषः सुसमयः प्राप्तः अस्ति'' इति ।

एतत् वचनं श्रुत्वा धर्मराजः उक्तवान् - ''अम्ब ! एतद्विषये भवत्या त्वरा कृता । अस्माकम् आशाः, अस्माकम् उन्नतिः च भीमम् एव अवलम्ब्य तिष्ठन्ति । एतत् भवती अपि जानाति एव । अग्रे राज्यप्राप्त्यर्थं यदि कौरवाः सम्मुखीकरणीयाः स्युः तर्हि भीमं विना का अन्या गतिः ? दुर्योधनः वञ्चनया अस्मान् सर्वान् लाक्षागृहे मारयितुं यदा प्रयत्नं कृतवान् तदा सर्वेषां रक्षणे भीमः एव समर्थः जातः, न अन्यः । एवं स्थिते घोरविपदः सम्मुखीकरणार्थम् इदानीं भीमस्य प्रेषणं किम् उचितं भवेत् ?'' इति ।

तदा कुन्तीदेवी उक्तवती - ''वत्स ! विपद्ग्रस्तानां रक्षणं क्षत्रियकुलोत्पन्नानां कर्तव्यम् । उपकारस्य प्रत्युपकारः

मानवमात्रस्य धर्मः । अतः इदानीं बकसमीपं भीमस्य प्रेषणं सर्वथा योग्यम् एव । भीमस्य कोऽपि अपायः स्यात् इति भीतिः तावत् अनुचिता । तस्य सामर्थ्यातिशयः भवता अविदितः तु न । घोरातिघोरम् अपि राक्षसं संहर्तुं सामर्थ्यम् अस्ति तस्य । अतः अलं चिन्तया । मम एषः निर्णयः इहलोके परलोके च श्रेयस्करः अस्ति'' इति । अन्ते अनन्योपायः धर्मराजः कुन्त्याः वचनम् अङ्गीकृतवान् ।

अनन्तरदिने प्रातः भीमः गृहस्वामिनं ब्राह्मणम् उक्तवान् - ''आर्य ! महती बुभुक्षा मम । यदि पूर्णोदरम् आहारः दीयेत तर्हि अहं राक्षसम् उत्साहेन सम्मुखीकर्तुं शक्नुयाम्'' इति । ब्राह्मणः एतत् अङ्गीकृत्य भीमाय विविधानि रुचिकराणि भक्ष्यभोज्यानि, दधि-मधु-घृतादीनि, फल-पानीयादीनि च व्यवस्थापितवान् ।

एतत्सर्वं खादित्वा तृप्तिं प्राप्य भीमः अन्नराशियुक्ते शकटे महिषद्वयं संयोज्य दक्षिणदिशि गतवान् । यत्र बकः वसति स्म ततः अनतिदूरे यमुनानदी प्रवहति स्म । नदीतीरे शकटं स्थगयित्वा उच्चध्वनिना बकम् आहूतवान् भीमः । ततः शकटस्थम् आहारं विना त्वरां खादितुम् उद्युक्तः अभवत् च ।

'मम आहारार्थम् आगतः अद्य माम् एव आह्वयन् अस्ति खलु ? कथम् अद्य एतत् विचित्रम् !' इति चिन्तयन् महता कोपेन वनमध्यात् आगतवान् बकासुरः । एकचक्रपुरीयैः प्रेषितम् आहारं तृप्त्या खादन्तं भीमं दृष्टवतः तस्य कोपः उग्रताम्





आपन्नः । सः क्रोधेन – "अये दुष्ट ! कः भवान् ? मरणसमये अपि एषा का खादनापेक्षा भवतः ? धिक् भवन्तम्" इति वदन् गर्जनं कृतवान् ।

भीमः बकासुरं सकृत् कटाक्षेण दृष्ट्वा उपहासपूर्वकं हसन् यथापूर्वं खादनम् अनुवर्तितवान् । बकः उच्चैः आक्रोशनं कुर्वन् मुष्टिं बद्ध्वा भीमसमीपम् आगतवान् । एतत् दृष्ट्वा अपि भीमः किञ्चिदपि विचलितः न जातः । गर्जनम्, आक्रोशनं, क्रोधवचनं च श्रुत्वा अपि निश्चिन्ततया स्थितवन्तं भीमं दृष्ट्वा बकः क्रोधेन ज्वलन् मुष्टिद्वयेन भीमं पृष्ठे प्रहृतवान् । भीमस्तु तदपि अपरिगणयन् शकटस्थं समग्रम् आहारं समाप्य नदीं गत्वा हस्तौ पादौ च प्रक्षालितवान् ।

एताम् उपेक्षाम् असहमानः बकः एकं वृक्षम् उत्पाट्य भीमं लक्ष्यीकृत्य क्षिप्तवान् । भीमः तं वृक्षं लीलया हस्तेन कन्दुकम् इव गृहीतवान् । यदा बकः अपरं वृक्षम् उत्पाट्य क्षिप्तवान् तदा भीमः स्वहस्तस्थेन वृक्षेण तं वृक्षं निवारितवान् । बकः परितः स्थितान् सर्वान् वृक्षान् उत्पाट्य एकैकशः भीमं लक्ष्यीकृत्य क्षिप्तवान् । तान् सर्वान् अपि विनायासं निवारितवान् भीमः । एषः व्यवहारः किञ्चित्कालं प्रवृत्तः ।

यदा समीपे वृक्षः कोऽपि न लब्धः तदा बकः अग्रे गत्वा भीमं हस्ताभ्यां गृहीतवान् । तदा भीमः हस्तस्थं वृक्षं पार्श्वे क्षिप्त्वा बाहुयुद्धार्थं सन्नद्धः अभवत् । बाहुयुद्धं कुर्वन्तौ तौ किञ्चित्कालं परस्परम् आकृष्टवन्तौ । अन्ते भीमः बकासुरं भूमौ पातितवान् । तस्य उपरि उपविश्य हस्ताभ्यां प्रहरन् जानुभ्यां निपीडयन् तस्य कण्ठं गृहीत्वा बलात् नोदनं कृतवान् । बकासुरः उच्चैः आक्रोशनं कुर्वन् रक्तं वमन् प्राणैः वियुक्तः अभवत् ।

बकासुरस्य आक्रोशनं श्रुत्वा तस्य बान्धवाः सर्वे धावन्तः तत्र आगताः । तान् उद्दिश्य भीमः – "इतः परं भवत्सु कोऽपि आहारार्थम् एतत्प्रदेशस्य कमपि जनं यदि कटाक्षेण वा पश्येत् तर्हि सः बकेन प्राप्तां गतिम् एव प्राप्नुयात् । जागरूकाः भवन्तु सर्वे । हुं, धावन्तु इतः" इति उक्त्वा कोपेन हुङ्कृतवान् । तदा ते सर्वे भीत्या कम्पमानाः ततः पलायितवन्तः ।

एतदनन्तरं भीमः बकासुरस्य शवम्

आकृष्य आनीय नगरद्वारस्य समीपे पातितवान् । ततः नदीं गत्वा स्नात्वा गृहं प्रतिगत्य प्रवृत्तं सर्वं धर्मराजं निवेदितवान् च । बकस्य शवः नगरस्थैः सर्वैः दृष्टः । किन्तु बकस्य संहर्ता कः इति तु केनापि न ज्ञातम् एव । तथापि ते - 'एतं यः पुण्यपुरुषः मारितवान् सः चिरं सुखेन जीवतु' इति प्रार्थनां कृतवन्तः । ब्राह्मणस्य पर्यायः यस्मिन् दिने आसीत् तस्मिन् एव दिने बकः मृतः इत्यतः सर्वे ब्राह्मणसमीपम् आगत्य पृष्टवन्तः - "बकस्य संहर्ता कः ?" इति ।

भीमस्य नाम कुत्रापि न वक्तव्यम् इति कुन्ती पूर्वम् एव सूचितवती आसीत् इत्यतः ब्राह्मणः नगरजनान् उद्दिश्य - "ह्यः मम गृहस्य पर्यायः आसीत् इति तु सत्यम् एव । ह्यः यदा अहं किङ्कर्तव्यमूढतया चिन्तामग्नः आसं तदा कश्चन सिद्धपुरुषः आगत्य मम समस्यां ज्ञात्वा मया निषिध्यमानः अपि राक्षसाय आहारं नीतवान् । 'राक्षसः मां किमपि कर्तुं न अर्हति' इति सविश्वासं वदति स्म सः । अद्य राक्षसः मृतः दृश्यते इत्यतः अहं तर्कयामि यत् सः सिद्धपुरुषः एव उपायेन राक्षसं मारितवान् स्यात् इति" इति उक्तवान् ।

नगरजनाः सर्वे ब्राह्मणं विशेषतः श्लाघितवन्तः । आनन्देन उत्सवम् आचरितवन्तः च । पाण्डवाः अपि तस्मिन् उत्सवे आनन्देन भागं गृहीतवन्तः । एवम् एव पाण्डवानाम् अज्ञातवासः अनुवृत्तः ।

अथ कदाचित् कश्चन देशसञ्चारी ब्राह्मणः तस्य ब्राह्मणस्य गृहम् आगतवान्, यस्मिन् च पाण्डवाः वसन्ति स्म । सः ब्राह्मणस्य आतिथ्यं प्राप्य देशसञ्चारात् प्राप्तम् अनुभवं श्रावितवान् । तत्सन्दर्भे, पाञ्चालदेशस्य राजा द्रुपदः इति अस्ति इति, द्रुपदस्य शिखण्डी धृष्टद्युम्नः चेति पुत्रौ, द्रौपदी इति पुत्री चापि अस्ति इति, द्रौपद्याः स्वयंवरस्य सन्नाहः प्रचलति इति च उक्तवान् सः । एतं च वृत्तान्तं कुन्ती पाण्डवाश्चापि श्रुतवन्तः । ते ब्राह्मणं निवेदितवन्तः यत् एतत्सर्वं विस्तरेण वक्तव्यम् इति । सः ब्राह्मणः एतत् अङ्गीकुर्वन् सर्वं विस्तरेण वक्तुम् उद्युक्तः अभवत् ।



# सहकारबुद्धिः

शिवानन्दः कदाचित् पार्श्वग्रामवासिनः मित्रस्य सोमशेखरस्य दर्शनार्थं प्रस्थितवान् । मध्येमार्गं तेन विपण्यां चित्रद्वयं क्रीतम् । तयोः एकं विष्णोः, अपरं शिवस्य च आसीत् ।

मित्रस्य गृहं गतवान् शिवानन्दः - "मित्र ! भवते उपायनरूपेण दातुम् एव एतत् चित्रद्वयं क्रीतं मया" इति वदन् चित्रद्वयं सोमशेखराय दत्तवान् ।

सोमशेखरः महता सन्तोषेण तत् चित्रद्वयं स्वीकृत्य, प्रकोष्ठस्थम् आणिद्वयं स्वीकृत्य, पुत्रम् आहूय - "अये, पार्श्वगृहं गत्वा मुद्गरम् आनयतु रे" इति आदिष्टवान् ।

पुत्रः पार्श्वगृहं गत्वा प्रत्यागत्य - "तैः उक्तं यत् अस्माकं गृहे मुद्गरः नास्ति इति" इति उक्तवान् ।

"तर्हि नारायणस्य गृहं गत्वा आनयतु" इति पुनः सूचितवान् सोमशेखरः । तत्रापि मुद्गरम् अप्राप्य प्रत्यागतवान् पुत्रः । खिन्नः सोमशेखरः पुनरपि द्वित्राणि गृहाणि प्रति मुद्गरस्य आनयनार्थं पुत्रं प्रेषितवान् । किन्तु कुत्रचित् अपि मुद्गरः न प्राप्तः ।

एतत् दृष्ट्वा महता खेदेन शिवानन्दम् उक्तवान् सोमशेखरः - "पश्यतु अस्माकं ग्रामीणानां व्यवहारम् । सर्वेषां गृहे अपि मुद्गरः अस्ति एव । तथापि केनापि मुद्गरः न दत्तः । एवं चेत् ग्रामे ऐक्यं कथं वा वर्धेत ?" इति ।

उत्तरं किमपि वक्तुम् अशक्नुवन् शिवानन्दः मौनम् आश्रितवान् । तदा सोमशेखरः एव पुनरपि पुत्रम् आहूय - "अये, केनापि मुद्गरः न दत्तः चेत् किं वा कर्तुं शक्येत ? गृहस्य पृष्ठभागस्थे प्रकोष्ठे स्थितं प्राचीनमुद्गरम् एव आनयतु तावत्" इति उक्तवान् ।

अन्येषाम् असहकारबुद्धिं निन्दतः सोमशेखरस्य एतं व्यवहारं दृष्ट्वा शिवानन्दः आश्चर्यचकितः अभवत् ।



# वटवृक्षः

अस्माकं देशे प्रायः तादृशः ग्रामः न स्यात् यत्र च वटवृक्षः न भवेत् । ग्रामसीमायां दृश्यमानः वटवृक्षः मनुष्याणां धेन्वादिपशूनां च आश्रयस्थानम् । एतस्य वृक्षस्य शाखातः निर्गताः बह्व्यः जटाः लम्बमानाः दृश्यन्ते ।

अस्माकं देशात् निर्गताः 'बनिया' पदेन निर्दिश्यमानाः वणिजः पर्शियाप्रभृतिषु देशेषु वटवृक्षस्य अधः विश्रान्त्यर्थं वसन्ति स्म । अतः एव पर्शियन्भाषया एतस्य वृक्षस्य नाम 'बनियन्' इत्येव जातम् । हिन्दीभाषया 'बोर्' इति, मराठीभाषया 'वार्' इति, तमिळुभाषया 'आल' इति, मलयाळभाषया 'पेरल्' इति कन्नडभाषया च 'आल' इति च एषः वृक्षः निर्दिश्यते । आंग्लभाषया 'इण्डियन् फिग्' इति निर्दिश्यते ।

प्राचीने काले सन्तानरहिताः जनाः अपत्यप्राप्त्यर्थं ज्येष्ठमासस्य अमावास्यायां वटवृक्षं पूजयन्ति स्म । पत्युः सत्यवतः प्राणान् रक्षितुं महापतिव्रता सावित्री अपि वटवृक्षं पूजितवती इति कथाभ्यः ज्ञायते । सृष्टेः अन्ते यदा जलप्रलयः भविष्यति तदा महाविष्णुः शिशुत्वं प्राप्य वटपत्रे शयनं करिष्यति इति विष्णुभक्ताः वदन्ति । अतः एव वटपत्रशायिनः बालकृष्णस्य आकर्षकाणि चित्राणि महता प्रमाणेन विक्रीतानि भवन्ति ।

कलकत्तासमीपस्थे सस्यशास्त्रोद्याने स्थितः वटवृक्षः, मद्रास्नगरस्य 'अडयार् थियासोफिकल् सोसैटि' इत्येतस्याः संस्थायाः आवरणे स्थितः वटवृक्षः, बिहारराज्ये गोपपुरे स्थितः वटवृक्षः, तस्मिन् एव राज्ये 'काम्टे' इत्यत्र स्थितः वटवृक्षश्च प्राचीनत्वेन ख्याताः सन्ति । 'काम्टे' - प्रदेशस्थः वटवृक्षः एकरत्रय-परिमितं प्रदेशम् आवृत्य तिष्ठति ।



वटवृक्षस्य पत्राणि अण्डाकारकाणि स्थूलानि च भवन्ति । वटवृक्षः फेब्रवरी-मार्चमासयोः पल्लवितः भवति । वटवृक्षस्य पुष्पाणि दृष्टिगोचराणि न भवन्ति । फलानि च गुच्छाकारेण भवन्ति । पक्वानि फलानि रक्तवर्णेन शोभन्ते, पक्षिणः विशेषतः आकर्षन्ति च । वटवृक्षाः शताधिकवर्षाणि जीवन्ति अपि ।

अस्मद्देशीयाः ऋषयः - ३

# नारदः



दैवे दैवसृष्टौ च विशेषप्रीतिमान् ऋषिपुङ्गवः नारदमहर्षिः । सः ब्रह्मणः मानसपुत्रः । महाविष्णोः परमभक्तः च । 'महती' नामिकां वीणां वादयन् सः नारायणनाम जपन् देशसञ्चारं करोति । मनुष्याणां हितकाङ्क्षिषु नारदस्य प्रथमं नाम । विष्णुतः प्राप्तां विद्यां सः अर्हान् मानवान् बोधितवान् । नारायणनाम स्मरन् त्रिषु लोकेषु अपि सञ्चरन् असहायानां सज्जनानाम् उपकारं करोति स्म सः ।

मानवेषु सच्चारित्र्ययुक्तः श्रेष्ठः पुरुषः कः इति यदा वाल्मीकिना पृष्टं तदा नारदः तं श्रीरामवृत्तान्तम् उक्तवान् । तस्य कथनात् प्रेरितः वाल्मीकिः तमसानदीतीरस्थे आश्रमे उपविश्य रामायण-महाकाव्यं रचितवान् ।

पाण्डवाः यदा नूतनस्य नगरस्य निर्माणार्थं चिन्तनं कुर्वन्तः आसन्, तदा नारदः तत्र गत्वा आत्मना दृष्टाः इन्द्रपुरी अलकानगरी इत्यादीः दिव्यनगरीः वर्णितवान् । तदनन्तरं पाण्डवाः राजधानीम् इन्द्रप्रस्थं निर्मितवन्तः ।

'नारदः कलहप्रियः' इति अपवादवचनं श्रूयते लोके । वस्तुतः तु आपाततः दर्शनात् नारदस्य कलहप्रियता दृश्यते चेदपि तस्य आन्तर्यस्य दर्शनात् ज्ञायते यत् लोककल्याणम् एव तस्य उद्देशः इति । सज्जनत्वरूपेण दुष्टतायाः परिवर्तनार्थं, धर्मस्य जयार्थं च नारदस्य कलहप्रियता मार्गं कल्पयति स्म । अत्र उदाहरणानि बहूनि । द्वापरयुगे बालः कृष्णः कुत्र वर्धमानः अस्ति इति ज्ञातुम् अशक्नुवन् कंसः यदा चिन्ताक्रान्तः आसीत् तदा नारदः कृष्णस्य वासस्थलं कंसम् उक्तवान् । कृष्णस्य मारणार्थं त्वरां कुर्वन् कंसः स्वयं मरणं प्राप्तवान् । एवं लोकस्य पीडायाः निवारणार्थं, कंसस्य दुष्कृत्यानां समापनार्थं च नारदस्य 'कलहप्रियता' एव कारणं जाता ।

रावणस्य मरणार्थम् अपि परोक्षतया नारदः एव कारणम् आसीत् । कदाचित् रावणः नारदं पृष्टवान् यत् ओङ्कारस्य किं रहस्यं, किं च तात्पर्यम् इति । तदा नारदः उक्तवान् यत् तत् ज्ञातुं भवतः अर्हता नास्ति इति । एतत् श्रुत्वा कुपितः रावणः नारदस्य जिह्वां छेदयितुम् उद्युक्तः । तदा नारदः शापं दत्तवान् - 'अचिरात् एव भवतः दशानाम् अपि शिरसां छेदः भवतु' इति ।

नारदस्य जिज्ञासा अधिका । कदाचित् सः महाविष्णुं पृष्टवान् - ''प्रपञ्चस्य सृष्टेः आधारः माया

इति वचनं श्रूयते । सा माया कीदृशी ?'' इति । तदा महाविष्णुः मन्दहासपूर्वकम् उक्तवान् - 'एतं विषयं भवान् स्वानुभवात् एव ज्ञास्यति' इति ।

कदाचित् नारदः यथापूर्वं भूलोकसञ्चारं कुर्वन् कस्मिंश्चित् ग्रामे सञ्चारं कुर्वन् आसीत् । तदा अकस्मात् महती वृष्टिः आगता । आश्रयम् इच्छन् नारदः कस्यचित् गृहस्य द्वारम् अङ्गुल्या ताडितवान् । काचित् सुन्दरी युवतिः द्वारम् उद्घाटितवती । तस्याः मातापित्रोः प्रार्थनां पुरस्कुर्वन् नारदः तां तरुणीं परिणीय तत्रैव वासम् आरब्धवान् । तस्य पुत्राः उत्पन्नाः । कौटुम्बिकजीवनस्य सुखदुःखादिकम् अनुभूतवान् सः । अथ कदाचित् रात्रौ उग्रः नदीप्रवाहः तस्य गृहम् आवृत्य अतिष्ठत् । पत्नीपुत्रादयः नदीप्रवाहेण नीताः । एतत् दृष्ट्वा दुःखं सोढुम् अशक्नुवन् नारदः विलपन् - ''हा हन्त ! मम पत्नीपुत्रादयः निर्गताः खलु । हे भगवन् ! कीदृशः एषः निष्करुणव्यवहारः भवतः'' इति क्रन्दनं कृतवान् ।

अपरक्षणे एव भगवान् विष्णुः तस्य पुरतः प्रत्यक्षीभूय - ''नारद ! त्रिलोकसञ्चारिणः विवेकिनः भवतः का एषा दुर्दशा ? किम् एतत् अनुचितं विलपनम् ?'' इति पृष्टवान् । तदा 'माया नाम का' इति सम्यक् अवगच्छन् नारदः विष्णुं साष्टाङ्गं नमस्कृत्य तस्य स्तोत्रं कृतवान् ।

'विवाहानन्तरं वर्षाभ्यन्तरे सत्यवतः आयुः समाप्तं भविष्यति' इति सावित्र्याः पितरम् अश्वपतिं नारदः एव उक्तवान् । ततः एव सावित्री मनस्स्थैर्यं प्राप्य धर्मं सम्मुखीकर्तुं, पत्युः प्राणान् प्रतिप्राप्तुं च शक्तवती ।

एवं बह्वीषु पुराणकथासु नारदस्य प्रस्तावः विशेषतः कृतः दृश्यते । भक्तिसाहित्यक्षेत्रे नारदभक्तिसूत्राणां विशेषमहत्त्वम् अस्ति ।



# भवन्तः जानन्ति वा ?

१. प्रपञ्चस्तरे अत्यधिकतया तैलम् उत्पादयन् देशः कः ?
२. 'भारतीयः शेक्सपियर्' इति ख्यातिं गतः प्रसिद्धः कविः कः ?
३. 'ग्रीन्ल्याण्ड्' इत्येषः कस्य देशस्य भागः ?
४. सः नदः कः, यश्च टिबेट्प्रदेशात् जन्म प्राप्य हिमालये प्रवहन् समुद्रप्राप्तितः पूर्वं गङ्गया मिलितः भवति ?
५. तृणजातीयम् अत्युन्नतं सस्यं किम् ?
६. अस्माकं देशस्य किं नगरं 'सप्तद्वीपयुतम्' इति उच्यते ?
७. आकाशवाणी (रेडियोयन्त्रम्) कः अन्विष्टवान् ?
८. 'रामचरितमानस' ग्रन्थस्य रचयिता कः ?
९. 'अर्थशास्त्रपितामहः' इति निर्दिश्यमानः आधुनिकः वैदेशिकः कः ?
१०. रजपूतकुलजाता का युवराज्ञी अक्बरं परिणीतवती ?
११. 'मलेरिया' रोगनिवारकं 'क्विनैन्' नामकम् औषधं कस्य वृक्षस्य मूलात् सङ्गृह्णन्ति ?
१२. तत् दक्षिणभारतीयं नगरं किं, यत्र च आङ्ग्लसेनायाः प्रधानकार्यालयः भवति स्म ?
१३. इण्डोनेशियादेशीयस्य 'सुमात्रा' नामकस्य द्वीपस्य प्रसिद्धम् अपरं नाम किम् ?
१४. राष्ट्रस्तरीयासु क्रिकेट्स्पर्धासु भागम् ऊढवत्सु अत्यधिकवयस्कः कः ?
१५. १४९८ तमे वर्षे 'केप् आफ् गुड् होप्' द्वारा भारतं प्रति मार्गं कः अन्विष्टवान् ?
१६. रामायणकथायां प्रस्तुतस्य लक्ष्मणस्य पत्न्याः नाम किम् ?
१७. बर्लिन्नगरं कस्याः नद्याः तीरे अस्ति ?
१८. ईजिप्ट्देशीयस्य तस्य नाम किं यश्च सर्वप्रथमं प्रपञ्चपर्यटनं कृतवान् ?

## उत्तराणि

१. रशियादेशः ।
२. कालिदासः ।
३. डेन्मार्क्देशस्य ।
४. ब्रह्मपुत्रनदः ।
५. वेणुसस्यम् ।
६. मुम्बयीनगरम् ।
७. जि. मार्कोनी ।
८. तुलसीदासः ।
९. आडम् स्मित् ।
१०. जोधाबायी ।
११. 'सिङ्कोना' वृक्षस्य मूलात् ।
१२. बेङ्गलूरुनगरम् ।
१३. जावा मैनर् इति ।
१४. इङ्ग्लण्ड्देशीयः वल्ली रोड्स् । (५२ वर्षीयः)
१५. वास्को-डि-गामा ।
१६. ऊर्मिला इति ।
१७. स्प्रीनद्याः तीरे ।
१८. हेना इति ।



# खेदस्य अपगमः

कमलापुरनामके ग्रामे रघुरामः नाम कश्चन सज्जनः आसीत् । परोपकारकरणे एव तस्य विशेषासक्तिः । किन्तु ततः ये उपकारं प्राप्नुवन्ति स्म तेषु बहवः रघुरामविषये कृतज्ञताभावं न प्रकटयन्ति स्म । क्वचित् तम् उपेक्षया पश्यन्ति स्म अपि । अतः रघुरामः सर्वदा अपि चिन्ताक्रान्तः भवति स्म ।

वाणी रघुरामस्य पत्नी । पत्युनुकूला सा । पत्युः चिन्ताक्रान्ततां सोढुं न शक्नोति स्म सा । अतः कदाचित् सा पतिम् उक्तवती – "परोपकारतः भवान् सन्तोषात् अपि अधिकं खेदं चिन्तां न अनुभवति । एवं स्थिते किं तेन परोपकारेण ? परित्यजतु तां प्रवृत्तिम् । अन्येषां कष्टसुखविषयं मा चिन्तयतु भवान्" इति ।

जनानां व्यवहारतः खिन्नः रघुरामः पत्न्याः एतम् उपदेशम् अङ्गीकृतवान् । तस्मिन् एव काले प्रतिवेशी शिवरामः ग्रामं परित्यज्य नगरे वासं कर्तुम् इच्छन् ग्रामस्थस्य स्वगृहस्य विक्रयणभारं रघुरामे आरोपयितुम् इष्टवान् । शिवरामस्य अपेक्षां श्रुत्वा रघुरामः उक्तवान् – "अहं यस्य उपकारं करोमि ततः मया खेदः एव प्राप्यते कथञ्चित् । अतः एतत् कार्यम् अन्यस्मै एव समर्पयतु, न तु मह्यम्" इति ।

एतत् श्रुत्वा शिवरामः हसन् – "अस्तु तर्हि । गृहं कीलयित्वा अहम् एव कुञ्चिकां नेष्यामि । यदि कोऽपि गृहं क्रेतुम् इच्छन् आगच्छेत् तर्हि भवान् तस्य योग्यतां परीक्ष्य एकं पत्रं दत्त्वा तं नगरं प्रति प्रेषयतु । अग्रिमव्यवहारम् अहम् एव निर्वक्ष्यामि । यः भवतः पत्रम् आनेष्यति तस्मै एव गृहं दास्यामि, न अन्यस्मै" इति उक्त्वा द्वित्रदिनानाम् अनन्तरं नगरं प्रति गतवान् ।

ततः केषाञ्चित् दिनानाम् अनन्तरं



मम गृहे एव निवसतु । किमर्थम् अन्यस्य गृहस्य क्रयणस्य चिन्ता ? वयं सम्भूय मम गृहे एव निवसाम'' इति उक्तवान् ।

'शिवरामस्य गृहस्य दापनम् अनिच्छन् रघुरामः एवं वदति' इति चिन्तयन् खेदं च अनुभवन् भीमसेनः वासपरिवर्तनयोजनां परित्यक्तवान् ।

पुनः केषाञ्चित् दिनानाम् अनन्तरं गोपालः नाम कश्चन गृहस्थः रघुराम-समीपम् आगत्य - ''श्रीमन् ! अहं निर्धनः । समग्रं धनं युगपत् दत्त्वा गृहं क्रेतुं मम सामर्थ्यं नास्ति । भवता यदि संस्तुपिपत्रदानस्य कृपा प्रदर्श्येत तर्हि आजीवनं भवतः उपकारं स्मरेयम्'' इति निवेदितवान् ।

रघुरामस्य श्यालः भीमसेनः कमलापुरे वासं कर्तुम् इच्छन् शिवरामस्य गृहस्य क्रयणे अपेक्षां प्रकटितवान् । किन्तु रघुरामः तस्मै संस्तुतिपत्रं दातुं न इष्टवान् । 'यदि बान्धवाय गृहं दाप्येत तर्हि शिवरामः अन्यथा चिन्तयेत्' इति भीतिः तस्य ।

एतत् ज्ञात्वा भीमसेनः उक्तवान् - ''एतत् गृहं तु अत्युत्तमम् अस्ति । यदि एतत् प्राप्येत तर्हि भवतः गृहस्य पार्श्वे एव मम वासः स्यात् । भवता यदि एकं संस्तुतिपत्रं दीयते तर्हि अहं तत् गृहं क्रेष्यामि । शिवरामः यत् मूल्यं वदति तत् दास्यामि च'' इति ।

किन्तु रघुरामः एतं प्रस्तावं निराकुर्वन् - ''भवान् मम पत्न्याः सहोदरः खलु ? मम गृहं तु सुविशालम् अस्ति । अतः भवान् सपरिवारं

'यदि कोऽपि युगपत् एव धनं दत्त्वा गृहं क्रेतुम् इच्छेत् तर्हि पत्रं दातुं शक्येत । एषः तु भागशः धनं ददामि इति वदति । एतादृशाय संस्तुतिपत्रं दातव्यम् उत न ?' इति चिन्तयन् स्थितवान् रघुरामः ।

''भवान् विचिन्त्य निर्णयं वदतु । अहं पुनः आगमिष्यामि'' इति उक्त्वा ततः निर्गतवान् गोपालः ।

ततः अल्पे एव काले गोपालस्य पत्नी रुक्मिणी रघुरामस्य पत्नीं वाणीं दृष्ट्वा - ''मम पतिः हृदयरोगी । स्वगृहे वासः करणीयः इति तस्य प्रबला इच्छा । तम् एव विषयं सदा चिन्तयन् भवति सः । वैद्यः उक्तवान् अस्ति यत् गृहं क्रीत्वा यदि वासः क्रियते तर्हि हृदयरोगः उपशाम्यति इति । वयम् इदानीं

यस्मिन् भाटकगृहे निवसामः तस्य गृहस्य स्वामी 'गृहं परित्यक्तव्यम्' इति सानुरोधं पुनः पुनः वदन् अस्ति। एतेन मम पत्युः चिन्ता वर्धमाना अस्ति। यदि भवत्याः पतिः साहाय्यं कुर्यात् तर्हि एकं कुटुम्बं रक्षितं स्यात्। मम पत्युः प्राणाः भवत्याः पत्युः हस्ते सन्ति'' इति रोदनपूर्वकम् उक्तवती। एतेन आर्द्रहृदया वाणी पतिं सानुरोधम् उक्तवती यत् गोपालाय संस्तुतिपत्रं ददातु इति। एतदनुगुणं रघुरामः गोपालाय संस्तुतिपत्रं लिखित्वा दत्तवान्।



तत् स्वीकृत्य नगरं गतः गोपालः द्वित्रदिनानन्तरम् आगत्य - ''भवान् तु सज्जनः। किन्तु भवतः स्नेहितः धनैकप्रियः। सः वदति यत् मासाभ्यन्तरे एव समग्रं धनं दातव्यम् इति च। मानवीयता सर्वथा नास्ति तस्मिन्। यदि भाटकगृहं कुत्रापि न लभ्येत तर्हि वृक्षस्य अधः वा वासं कुर्याम्। धनपिशाचस्य एतस्य गृहं तु न क्रीणीयाम् एव'' इति उक्तवान्।

'एतस्याः घटनातः हृदयरोगिणः गोपालस्य का गतिः स्यात्?' इति चिन्तयन् भीतः रघुरामः सान्त्वनवचनैः गोपालस्य कोपं शमयित्वा - ''भवतः अर्थसामर्थ्यदृष्ट्या एतस्य गृहस्य मूल्यम् अधिकम् इति भासेत। किन्तु एतत् एव गृहम् इतोऽपि अधिकं धनं दत्त्वा क्रेतुं सिद्धः अस्ति मम श्यालः'' इति उक्त्वा पूर्वं प्रवृत्तं समग्रं निवेदितवान्।

ततः पुनरपि नगरं गतः गोपालः 'अग्रे किं कृतम्' इति रघुरामं तु न उक्तवान् एव। पक्षानन्तरं ग्रामे अटन् सः ग्रामीणान् उक्तवान् यत् मया शिवरामस्य गृहं क्रीतम् इति।

गृहक्रयणवार्ता गोपालात् एव ज्ञातव्या इति उद्देशेन कदाचित् रघुरामः गोपालस्य परिवारं भोजनार्थम् आहूतवान्। ते सर्वे सन्तोषेण भोजनं कृत्वा गतवन्तः, किन्तु गृहक्रयणवार्ता केनापि न उक्ता एव। ततः अल्पे एव काले गोपालेन क्रियमाणः गृहप्रवेशसन्नाहः अपि रघुरामेण दृष्टः।

एतत् सर्वं दृष्टवतः रघुरामस्य खेदः प्रवृद्धः। पत्युः खिन्नमनस्कतां दृष्ट्वा वाणी कदाचित् पतिम् उक्तवती - ''एतस्मिन् सन्दर्भे साहाय्यार्थं भवन्तं प्रेरयन्त्या मया दोषः कृतः। तदर्थं भवता विषादः अनुभूयते। एतादृशेषु सन्दर्भेषु कथं



व्यवहरणीयम् इति मम सहोदरः भीमसेनः सम्यक् जानाति। कार्यान्ते उपेक्षां प्रदर्शयता विषये कथं व्यवहृतं चेत् ते उपेक्षां प्रदर्शितवन्तः जनाः विवेकं प्राप्नुयुः इत्यपि जानाति सः। अतः कानिचन दिनानि सः अस्मद्गृहे वसतु नाम'' इति।

तदा रघुरामः – ''मम गृहे वसतु इति मया पूर्वम् एव सः उक्तः आसीत्। किन्तु मद्वचनं न श्रुतवान् सः'' इति उक्तवान्।

''अन्यानुकम्पायाः पात्रं भवितुम् अनिच्छन् सः पूर्वम् अस्मद्गृहे वासं निराकृतवान् आसीत्। साहाय्यार्थं चेत् अवश्यम् आगत्य वसेत् सः'' इति उक्तवती वीणा।

रघुरामः शिरश्चालनपूर्वकम् अङ्गीकारं सूचितवान्। भगिनीद्वारा विषयं ज्ञातवान् भीमसेनः अनन्तरदिने एव रघुरामगृहे वासम् आरब्धवान्।

अत्रान्तरे कदाचित् गोपालः रघुरामस्य गृहम् आगतवान्। गृहं प्रविशन्तं तं द्वारसमीपे एव निरुध्य पृष्टवान् भीमसेनः – ''किं कार्यम् अत्र ?'' इति।

''श्वः एव गृहप्रवेशः। रघुरामवर्याय आह्वानं दातुम् अहम् आगतवान् अस्मि'' इति उक्तवान् गोपालः।

''रघुरामवर्यः अस्वस्थः अस्ति। भवता उक्तं विषयम् अहम् एव तं वदिष्यामि'' इति उक्त्वा गोपालं ततः एव प्रतिप्रेषितवान् भीमसेनः।

ततः रघुरामस्य गृहस्य पार्श्वे स्थिते गृहे प्रवेशकार्यक्रमः महता वैभवेन सम्पन्नः। ग्रामीणाः बहवः तस्मिन् कार्यक्रमे उपस्थिताः आसन्। किन्तु रघुरामस्य गृहात् कोऽपि न गतवान् एव।

ग्रामे एषः चर्चाविषयः जातः। कश्चित् ज्येष्ठः भीमसेनम् एतद्विषये पृष्टवान्। तदा भीमसेनः उक्तवान् – ''गोपालवर्यः मम आवुत्तं न आमन्त्रितवान् एव'' इति।

तत्समये तत्रैव स्थितः गोपालः भीमसेनम् उद्दिश्य उक्तवान् – ''अये, असत्यकथनं किमर्थम् ? यदा अहम् आमन्त्रयितुम् आगतः आसं, तदा – 'रघुरामवर्यः अस्वस्थः' इति कारणं वदन् भवान् एव खलु मम अन्तर्गमनं निवारितवान् आसीत् ?'' इति।

"मम आवुत्तस्य अस्वास्थ्यवार्तां श्रुत्वा भवान् सातङ्कम् अन्तः गत्वा तस्य योगक्षेमं विचारयेत् इति मम चिन्तनम् आसीत् । भवता तादृशं किमपि न कृतम् । ततः मया निर्णीतं यत् भवान् तस्य आत्मीयः न इति । अतः एव आमन्त्रणवार्ता न उक्ता मया" इति उक्तवान् भीमसेनः ।

"एषः विषयः गृहप्रवेशदिने वा मम गृहम् आगत्य यदि उक्तः स्यात् तर्हि अद्य व्यर्थचर्चा न अभविष्यत्" इति पुनरपि भीमसेने एव दोषम् आरोपितवान् गोपालः ।

"मम आवुत्तम् आमन्त्रयितुम् आगतः भवान् मां दृष्ट्वा अपि न आमन्त्रितवान् । अनाहूतः अहं भवतः गृहं प्रति कथं वा आगच्छेयम् ?" इति उक्तवान् भीमसेनः । प्रतिवचनं किमपि वक्तुम् अशक्नुवन् गोपालः मौनं ततः निर्गतवान् ।

गृहं प्रत्यागतः भीमसेनः प्रवृत्तं समग्रं रघुरामं निवेदितवान् । तदा रघुरामः - "किमर्थं तद्विषये कोपं प्रदर्शयन् रूक्षं व्यवहृतवान् भवान् ? तेन यदि अनुचितं कृतं स्यात् तर्हि तस्य फलं सः स्वयम् अन्वभविष्यत् खलु ?" इति उक्तवान् ।

"गोपालविषये किञ्चिदपि कोपः नास्ति मम । सः न मम मित्रं, न वा शत्रुः । यः शत्रुः वा मित्रं वा न भवति, तद्विषये कदापि अधिकं न चिन्तनीयम् । आवश्यकतायां सत्यां यथाशक्ति साहाय्यं करणीयम् । अग्रे तद्विषये अधिकं चिन्तनं न करणीयम् । एतत् बुद्धिमतां लक्षणम् । मया तु तदेव कृतम्" इति उक्तवान् भीमसेनः ।

एतत् श्रुतवता रघुरामेण स्वदोषः ज्ञातः । 'ये साहाय्यं प्राप्नुवन्ति ते उपकारस्य प्रतिफलरूपेण किमपि कुर्युः, वदेयुः वा इति अहम् अपेक्षां करोमि स्म । अतः एव मम मनसः समस्थितिः च्युता भवति स्म । भीमसेनः यथा वदति तथा उपकारं प्राप्तवतां विषये निर्लिप्तता आश्रयणीया' इति अवगतवान् रघुरामः ।

ततः आरभ्य निर्लिप्तताम् अधिकतया अवलम्बमानः सः सन्तोषेण दिनानि यापितवान् ।





# मीनग्रहणम्

कदाचित् अरण्यस्थाः सर्वे जन्तवः निर्णीतवन्तः यत् सर्वैः सम्भूय कृषिः करणीया इति । एतदनुगुणं सर्वैः अरण्यवासिभिः प्राणिभिः क्षेत्रकर्षणकार्यम् आरब्धम् अपि । अन्ये जीविनः इव कूर्मः शृगालश्चापि क्षेत्रकर्षणकार्ये उद्युक्तौ जातौ ।

सूर्यः यथा यथा आकाशमध्यं प्रति गतः तथा तथा तापः प्रवृद्धः । तापम् असहमानः कूर्मः नितरां श्रान्तः जातः । तस्य शरीरात् स्वेदधारा निर्गता । तथापि, 'कार्यं परित्यज्य यदि विश्रान्त्यर्थं गम्येत तर्हि अन्ये माम् अलसः इति निन्देयुः' इति चिन्तयित्वा कूर्मः कष्टम् अनुभवन् एव कार्यम् अनुवर्तितवान् । एतेन तस्य श्रान्तिः नितरां प्रवृद्धा । 'इतःपरम् अपि यदि अल्पा वा विश्रान्तिः न स्वीक्रियेत तर्हि मूर्च्छा प्राप्तव्या स्यात्' इति चिन्तयन् कूर्मः इतस्ततः दृष्टिं प्रसारितवान् ।

सर्वे कृषिकार्ये मग्नाः आसन् । कूर्मः कण्टकवेधनम् अभिनयन् पार्श्वभागम् आगतवान् । ततः गुल्मानां मध्ये पदानि स्थापयन् विनाशब्दं ततः निर्गतवान् । किञ्चिद्दूरं गमनेन तेन काचित् वाटिका प्राप्ता । वाटिकायाः मध्ये कश्चन कूपः आसीत् । स च वृक्षच्छायायाम् आसीत् । कूपस्य उपरि त्रिका दृश्यते स्म । त्रिका रज्ज्वा युक्ता आसीत् । रज्जोः अन्तद्वये जलपात्रद्वयम् आसीत् ।

कूर्मस्य महती पिपासा अपि आसीत् । कूपे जलं भवति इति जानाति स्म कूर्मः । अतः सः रज्ज्वा बद्धं जलपात्रं प्रविष्टवान् । कूर्मस्य भारस्य कारणतः जलपात्रं कूपस्य अन्तः गन्तुम् उद्युक्तम् अभवत् । एतत् दृष्टवतः कूर्मस्य मनसि क्षणकालं भीतिः उत्पन्ना । किन्तु किमपि कर्तुम् अशक्नुवन् सः जलपात्रे मौनं दृढम् उपविष्टवान् । यदा

' 'पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा' '

जलस्पर्शः अभवत् तदा जलपात्रस्य गमनं स्थगितम् अभवत्।

कार्यकरणे अलसः शृगालः कार्यं कुर्वन् इव अभिनयन् सर्वेषां व्यवहारं परिशीलयन् आसीत्। अतः सः कूर्मस्य निर्गमनम् अपि ज्ञातवान् एव। 'एषः कूर्मः किं करिष्यति इति द्रष्टव्यम्' इति निश्चित्य शृगालः मन्दं ततः निर्गत्य कूर्मेण गतं मार्गम् अनुसृतवान्। कूर्मस्य जलपात्रप्रवेशं, जलपात्रस्य कूपप्रवेशं चापि सः अपश्यत्। दशपञ्चदश निमेषाः अतीताः चेदपि यदा कूर्मः कूपात् बहिः न आगतः तदा शृगालः आश्चर्यं प्राप्तवान्। 'विना प्रतिफलं कूर्मः कूपं प्रवेष्टुं न अर्हति। प्रायः कूपे खादनयोग्यं किमपि स्यात्' इति आलोच्य शृगालः कूपस्य अन्तः दृष्टिं प्रसारितवान्। किन्तु कूपस्य गभीरता अधिका आसीत् इत्यतः तेन कूपे किमपि न दृष्टम्। अतः सः - "कूर्ममाम! कूर्ममाम!" इति आह्वयत्।

"कः तत्र? शृगालमामः वा भवान्?" इति कूपस्थः एव कूर्मः अपृच्छत्।

"आम्। तत्र किं कुर्वन् अस्ति भवान्?" इति अपृच्छत् शृगालः।

"मीनान् गृह्णन् अस्मि मित्र! प्रभूताः मीनाः अत्र! भवता अपि मीनाः यदि इष्यन्ते तर्हि भवान् जलपात्रे उपविश्य अत्र आगच्छतु" इति अवदत् कूर्मः।

कूर्मस्य वचनं सत्यम् इति भावयन् शृगालः जलपात्रे उपाविशत्। कूर्मस्य भारस्य अपेक्षया अपि शृगालस्य भारः अधिकः इत्यतः शृगालेन आरूढं पात्रम् अधः अगच्छत्। कूर्मस्य पात्रम् उपरि आगच्छत्। मध्येकूपं यदा पात्रद्वयम् अपि समस्थले आसीत् तदा कूर्मः शृगालम् उद्दिश्य - "मित्र! मीनान् गृह्णन् भवतु भवान्। अचिरात् एव अहम् आगमिष्यामि" इति उक्त्वा उपरि आगत्य पात्रात् भूमिं प्राप्य ततः निर्गतवान्।

सायं कार्यं समाप्य सर्वे जन्तवः जलपानार्थं कूपसमीपम् आगत्य यावत् जलम् उद्धृतवन्तः तावत् सः वराकः शृगालः कूपस्य अन्तः एव आसीत्!!



# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| अग्न्यस्त्रम् - | Cannon |
| अपसारिता - | Rejected |
| अभिज्ञातुम् - | To identify |
| अविदितः - | Unknown |
| आघ्राय - | Having smelt |
| आयत्तम् - | Subject to |
| उच्चाटनम् - | Dismissal |
| उडुपः - | Raft |
| उपशाम्यति - | Diminishes |
| उपेक्षा - | Negligence |
| कोट्यधीशः - | Millionaire |
| क्षुल्लकः - | Mean |
| जानु - | Knee |
| तरीतुम् - | To cross over |
| तापः - | Heat |
| त्रिका - | Pulley |
| द्वित्रवारम् - | Twice or thrice |
| ननान्दा - | Husband's sister |
| निर्लिप्तता - | Untainted |
| निश्रेणी - | Ladder |
| पङ्गुः - | Lame |
| परिवृत्तम् - | Changed |
| पर्यायः - | Turn |
| पालयिता - | One who governs |
| पुरस्करणीयः - | Worthy of honour |
| पूरयति - | Fulfils |
| प्रपौत्रः - | Grandson's son |
| बह्वट्टयुतम् - | Multistoried |
| भषणम् - | Barking |
| रमते - | Enjoys happiness |
| रूक्षम् - | Crudely |
| वेधनम् - | Pricking |
| व्यञ्जनम् - | Side-list |
| शलाका - | Stick |
| शृङ्खला - | Handcuff |
| श्यालः - | Wife's brother |
| सुमङ्गलीत्वम् - | Won . married bliss |
| संस्तुतिपत्रम् - | Letter of recommendation |
| संहर्ता - | Destroyer |
| हस्तगतः - | On hand |

अपने प्यारे चहेते के लिए जो हो दूर सुदूर
है न यहाँ अनोखा उपहार जो होगा प्यार भरपूर

# चन्दमामा



प्यारी-प्यारी सी चंदामामा दीजिए उसे उसकी अपनी पसंद की भाषा में —
आसामी, बंगला, अंग्रेजी, गुजराती, हिन्दी, कन्नड
मलयालम, मराठी, उड़िया, संस्कृत, तमिल या तेलुगु
—और घर से अलग कहीं दूर रहे उसे लूटने दीजिए घर की मौज-मस्ती

**चन्दे की दरें (वार्षिक)**

**आस्ट्रेलिया, जापान, मलेशिया और श्रीलंका के लिए**

समुद्री जहाज़ से रु. 117.00 वायु सेवा से रु. 264.00

**फ्रान्स, सिंगापुर, यू.के., यू.एस.ए.,**
**पश्चिम जर्मनी और दूसरे देशों के लिए**

समुद्री जहाज़ से रु. 123.00 वायु सेवा से रु. 264.00

अपने चन्दे की रकम डिमांड ड्राफ्ट या मनी ऑर्डर द्वारा
'चन्दामामा पब्लिकेशन्स' के नाम से निम्न पते पर भेजिए:

सर्क्युलेशन मैनेजर, चन्दामामा पब्लिकेशन्स, चन्दामामा बिल्डिंग्स, वडपलनी, मद्रास-६०० ०२६.

## चित्रशीर्षिका-स्पर्धा * पारितोषिकं १००/- रूप्यकाणि

### विजितां शीर्षिकां सप्टम्बर् - १९९५ मासे प्रकटयिष्यामः ।


Mahantesh C. Morabad


Mahantesh C. Morabad

* उपरितनं चित्रद्वयं पश्यन्तु । * युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा जुलै - २० तः पूर्वम् एव प्रेषयन्तु । * अनन्तरम् आगतां शीर्षिकां न परिशीलयिष्यामः । * स्पर्धायां विजेता १००/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति । * शीर्षिका समपत्रे (पोस्ट्-कार्ड्) एव लेखनीया । तत्र अन्यः विषयः न लेखनीयः । * अधोनिर्दिष्ट-सङ्केताय शीर्षिका प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्', ८ उपमार्गः, II घट्टः, गिरिनगरम्, बेङ्गलूरु - ५६० ०८५**

---

### 'मे' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः -

प्रथमचित्रम् - धारयित्वा बहून् वेषान् मर्कटं नर्तयाम्यहम् ।

द्वितीयचित्रम् - तिलकं चोट्टरागं च धृत्वा स्वं भूषयाम्यहम् ।

प्रेषकः - एस्.बि. कुम्भावी, TR - ३२ M.T.P. Fy. अम्बरनाथ्, थाणे - ४२१ ५०२, महाराष्ट्रम् ।


# चन्दमामा

वार्षिकं ग्राहकशुल्कं (भारते) - रू. ६०.००

विदेशीय-ग्राहकशुल्क-विवरणार्थं लिखन्तु -

डाल्टन् एजन्सीस्, चन्दमामा बिल्डिङ्ग्स्, वडपळनी, मद्रास् - ६०० ०२६

Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.


---

# Eagle Water Bottles

## we're all game for it

How about you?

- For cool, hygienic & odourless water.
- Useful at school & while travelling.
- Zingy shapes & colours to choose from.
- Available in capacities ranging from 325 ml. to 2200 ml.

Congo

Waves

Volga

Brooks

Amazon

OVER 1 LAKH SURPRISE GAMES TO BE WON

**NO ENTRY FEE**

No Purchase Required

To win a surprise game, match the names of Eagle Water Bottles with the phrases given below. And get this coupon stamped from your nearest Eagle outlet.

| | | | |
|---|---|---|---|
| A | Brooks | ☐ | A river in South America |
| B | Amazon | ☐ | A river in Russia |
| C | Congo | ☐ | Movement of sea |
| D | Volga | A | Streams of water |
| E | Waves | ☐ | A country in West-Central Africa |

Name: ________________ B'day: ________

Address: ________________________________

________________________________________

Entries must reach the following address before 31/8/95. Eagle Flask Industries Ltd., Eagle Estate, Talegaon-410507. Dist.Pune. Tel: 02114-22321-25. Fax: 02114-22676.

Winners will be intimated by post.



EAGLE FLASK INDUSTRIES LTD.

There's a lot you can do with Eagle.

DART/EF/3738